**University of Mysore**

Oriental Library Publications

SANSKRIT SERIES NO. 74

श्रीव्यासतीर्थविरचितम्

# तर्कताण्डवम्

श्रीराघवेन्द्रतीर्थकृतन्यायदीपाख्यव्याख्यासमलङ्कृतम्

प्रथमसम्पुटम्

---

# TARKA TĀṆḌAVAM

OF

SRI VYĀSATĪRTHA

WITH

THE COMMENTARY, NYĀYADĪPA OF

SRI RĀGHAVĒNDRATĪRTHA

**Vol. I**

EDITED BY

D. SRINIVASACHAR, M.A.

*Professor of Sanskrit, Maharaja's College and Curator, Govt. Oriental Library, Mysore*

AND

VIDWAN V. MADHWACHAR

*Govt. Oriental Library, Mysore*

---

MYSORE

PRINTED AT THE GOVERNMENT BRANCH PRESS

1932

# मुखोपन्यासः.

---

व्यासत्रयनाम्ना प्रथितेषु चन्द्रिकान्यायामृततर्कताण्डवाख्येषु ग्रन्थेषु कृतविमर्शानां महोदयानां विचारचातुरी स्वसिद्धान्तवैखरी सुतत्त्वमाधुरी च सुगमतमा भवतीति नाविदितमुद्घोषयामो वयम् । त्रिष्वप्येषु तर्कताण्डवाख्योयं वादग्रन्थाधिराजः निगमोपकारकतया शिष्टपरिगृहीतासु तर्कशास्त्रपरम्परास्वागन्तुकानां, 'वेदाः केनचित् कृताः । न प्रमाणम् । अपि तु सहकारिमहिम्नैव प्रमाणम् । ईश्वरः परिमितगुणः । दुःखध्वंसो मोक्षः' इत्यादिमविषयान् निगममहिमापकर्षकान् प्रतिपादयतां प्रबन्धानां दूषणीयतां, निगमाविरोधाकूतानामादरणीयतां च युक्त्यैव समर्पयति । यदस्य नाम्नि; तर्के ताण्डवं, तर्कस्य ताण्डवं, तर्केण ताण्डवमिति च त्रिधा विग्रहीतव्यमास्ते । तेन हि सप्तम्या अधःकारस्य, षष्ठ्या भावाविष्करणचेष्टाविशेषरूपताण्डवान्वयिनः सम्बन्धस्य, अनुमार्थकतर्कशब्देन युक्तेश्च, सुलभो लाभः ॥

कथमस्मिन्कल्पनावनपथे निःशङ्कसञ्चरणमादरश्चेति शङ्का परमवशिष्यते । तत्रैतद्व्याख्यानस्य दिशं प्रत्यङ्गुलिं प्रसारयामः । व्याख्यानस्यास्य, तात्पर्यचन्द्रिकायाः प्रकाशस्येव, सुधायाः परिमळस्येव च नर्तनोपकारकवस्तुनाम्ना न नामाभिहितम् । अपि तु मूलनाम्नोपि स्वनाम्नैव व्याचिख्यासया, शुष्कन्यायं दीपयति दहतीति, सन्न्यायं प्रकाशयतीति, न्यायेन युक्त्या प्रकाशत इति च सुलभत्रिविवरणं न्यायदीपनामैव । नैतावदेव सन्ति च वाक्यानि । सम्पुटेस्मिन् द्वितीय-

*

पुटे चतुर्दशतमपङ्क्तेः "अत्र न्यायचिन्तापरे ग्रन्थे" इत्यारभ्य "ब्रह्मतन्त्रोक्तप्रमेयनिर्णयोपयुक्तप्रमाणन्यायचिन्तापरत्वात्तद्विषयादिनैवास्य विषयादिमत्ता" इति ; तृतीयपुटे नवमपङ्क्तौ "ताण्डवकरणस्य प्रसञ्जकं पूर्वरङ्गं निबध्नाति" इति च। द्वितीयपुटे उपयुक्तचिन्तापदाभ्यां ब्रह्मतन्त्रा-(वेदान्ता)नुकूलाननुकूलन्याययोर्युक्तायुक्तत्वविमर्शनस्य तृतीयपुटपङ्क्त्या नर्तनार्थविवक्षायाः, सर्वत्र युक्त्यनुधावनस्य चावगमः सुलभः ॥

इहृम्महिम्नोस्य ग्रन्थस्य प्रथमं सम्पुटमिदानीं प्रकाशयामः। तत्र प्रथमतः ग्रन्थं ग्रन्थकर्तारं चाधिकृत्य कञ्चन मुखोपन्यासमारचयेम ॥

आस्तामनन्तरं विपुला ग्रन्थविचारणा। कर्तुरपि विचारे सङ्कुचितैवास्मदीया प्रवृत्तिः। यतः प्राचीनः सोमनाथकविवरेण्यः व्यासविजयाख्यकाव्ये सुविशालमुपाश्लोकयत्। उपलभामहे च मुद्रितं काव्यमिदमिदानीम् ॥

सुविचारविचारणाविवेकशौण्डस्यास्य तर्कताण्डवस्य ; अपरेषां—
१. न्यामृतम्, २. तात्पर्यचन्द्रिका, ३. तत्त्वविवेकटीकामन्दारमञ्जरी, ४. उपाधिखण्डनटीकामन्दारमञ्जरी, ५ मायावादखण्डनटीकामन्दारमञ्जरी, ६. मिथ्यात्वानुमानखण्डनटीकामन्दारमञ्जरी, ७. भेदोज्जीवनम्, इत्येषामपि ग्रन्थानां ग्रथयितारः पदवाक्यप्रमाणज्ञाः संप्रदायार्थकोविदाः व्यासराजमुनयः। एभ्यः पारिव्राज्यप्रदातारः—

"कंसध्वंसिपदाम्भोज संसक्तो हंसपुङ्गवः।
ब्रह्मण्यगुरुराजाख्यो वर्ततां मम मानसे" ॥

इति तात्पर्यचन्द्रिकादावादृता ब्रह्मण्यतीर्थमुनिवरेण्याः। विद्यागुरवस्तु सर्वशास्त्रविशारदाः ज्ञानभक्तिवैराग्यादिगुणगुम्भिताः श्रीपादराजाः इति

विश्रुता लक्ष्मीनारायणमुनयः । इममप्यभिप्रयन्तिग्रन्थकारा एव न्यायामृते—

“ ज्ञानवैराग्यभक्त्यादि कल्याणगुणशालिनः ।
लक्ष्मीनारायणमुनीन् वन्दे विद्यागुरून् मम ” ॥ इति ॥

एतेषामन्तेवासिन अनेके अवर्तन्त । तेषु चतुरधिकशतानां ग्रन्थानां निर्मातारो विजयीन्द्रसंयमीन्द्राः, गुर्वर्थदीपिकायुक्तिमल्लिकाद्यनेकग्रन्थकर्तारो वादिराजस्वामिनश्च सुप्रसिद्धाः ॥

क्रिस्तशकषोडशशतमाने भारतभूमिमिमे मूर्तितोप्यलमकुर्वन्निति शासनसंपादितो निर्णयः । “ विजयनगराधीशकृष्णदेवराजेन गौरपुराभिदो ग्रामः व्यासराजस्वामिभ्यः नवचत्वारिंशदधिकचतुःशतोत्तरैकसहस्रतमे शकाब्दे दत्तः ” इति हि शासने पठन्ति । गन्थैरेभिरखिलानुपकुर्वतामेषां विशेषतः सर्वे मध्वमतावलम्बिन अधमर्णा एव ॥

अयमपि तु कथासंग्रहः पण्डितरत्नबिरुदाङ्कितविद्वद्वरगौडगेरि वेङ्कटरमणार्यरचितचन्द्रिकाप्रकाशप्रसराख्यग्रन्थस्य भूमिकात उद्धृतः ॥

व्यासतीर्था एते गानशास्त्रे कर्णाटककविकर्माणि च सुकृतपरिचया इति एभिःकृतगानगाथापरिशीलनेन निश्चिनुमः । अत एषां शिष्यपरंपरे द्वे । गीर्वाणभाषया द्वैतसिद्धान्तप्रचारकाणामेका । कर्णाटकभाषया द्वैतसिद्धान्तप्रचारकाणामपरा । प्रथमपरंपरायां विजयीन्द्रादयः पण्डितप्रकाण्डा प्रथमपरिगणनाः । द्वितीयायां प्रसिद्धतमपुरन्दरदासादयः । यैः कृतगीतिकामेव सर्वे गानाभ्यासिनः प्रथममवलम्बन्ते । पुरंदरदासादयोपि नानधीतगीर्वाणप्रबन्धाः । अभ्यस्तवेदान्तशास्त्रा एव । परं लोकोपकाराय कर्णाटकभाषया प्रबन्धानबन्धयन् ॥

ततः प्रकृतग्रन्थमिममधिकृत्य विचारयिष्यामः । तर्कताण्डवस्येत्थं नामकरणे तदनुगुणत्वे. च पूर्वमेव किंचिदलिखाम । इदानीमत्र प्रकरणविभाग, प्रतिपादनीयं, प्रतिपादनापरिपाटीं च निरूपणायार्न-ष्यामः ॥

**विभागः**—आदौ प्रत्यक्षपरिच्छेदः शब्दपरिच्छेदः अनुमान-परिच्छेदः इति त्रिधा परिच्छेदनाम्ना विभागः कृतः । ४८७ पुटे ७ पङ्क्तौ, ४९०—१२ पङ्क्तौ, ५०५—५ पङ्क्तौ च व्याख्याने प्रथमद्वि-तीयतृतीयशब्दैः परिच्छेदशब्दोत्तराण्येव नामानि व्यक्तीभवन्ति । ब्रह्म-तन्त्रानुरोधेन परिच्छेदचतुष्टयकरणं विहाय विभागत्रयकरणे हार्दं किंचिदस्ति । प्रमाणानि त्रीण्येवेति प्रदर्शयामेति । द्वितीयपुटे व्या-ख्यान एव सुव्यक्तमिदम् ॥

परिशीलितेस्मिन् ग्रन्थे प्रायो विष्णुतत्त्वनिर्णयस्य प्रमाण-निरूपणवाक्यानां नानाविवरणान्युपलभ्यन्ते । तत्र "सदागमैक" इति श्लोकेन हरिं स्तुत्वा तत्रोक्तविशेषणानां तत्कोटिप्रविष्टानां च समर्थनायोत्तरोद्योगः, परिच्छेदनाम्नैव विभागः, तेपि त्रय एव हि वर्तन्ते । अत्रापि प्रथमतः "स्वतःप्रमाणै" रिति श्लोकः, तत्र श्रीरमणविशेषणकोटिप्रविष्टानां समर्थनार्थारम्भश्च वर्तेते । परिच्छेदत्रय-कृतिरपि तद्विभागकरणमनुरुणद्धीति वयमुत्प्रेक्षामहे । एतत्सम्पुटा-न्तिमग्रन्थपर्यालोचनया "स्वतः" इत्यादिश्लोकपूर्वार्धोक्तस्थापना-यैतावान्प्रबन्ध इति सुव्यक्तं भविष्यति । "तदेवं वर्णस्य गुणत्वे उक्तरीत्या ग्रहणासम्भवात् नित्यविभुद्रव्यात्मकवर्णसमुदायात्मकस्य वेदस्यापौरुषेयत्वं युक्तमिति" इति मूले । "युक्तमिति । तथाचा-म्नायैरादिवर्जितैरित्युक्तं साध्विति भावः" इति व्याख्यायां चास्ति ॥

परिच्छेदेष्वप्येष्वान्तरालिकान् षड्विभागान् तत्तद्विषयविवेचनानुगुणैर्वादशब्दोत्तरैर्नामभिरुपलभामहे । त इमे—

१. प्रामाण्यवादः

२. वेदापौरुषेयत्ववादः

३. ईश्वरवादः

४. वर्णवादः

५. समवायवादः

६. निर्विकल्पकवादः । इति ।

षट्स्वप्येषु द्वात्रिंशद्विभागाः सन्ति । तेषां "स्वमते ज्ञाप्तौ स्वतस्त्वनिरुक्तिः" इतिरीत्या विषयानुगुणान्येव नामानि, तत्तदन्ते लिखितान्यवलोक्यन्ते । विषयानुक्रमणिकायां तानि स्पष्टानि । यथा महाविभागानां नामसु समानः परिच्छेदशब्दः, यथा च तदल्पानां मध्यविभागानां नामसु वादशब्दः, एवमेवान्तिमविभागानां नामस्वपि समानोऽप्रतिकूलार्थदः कश्चन शब्दो भवेदेव । तेन प्रथमद्वितीयादिसंख्याशब्दान्योजयित्वाह्वयामेत्यपरमप्यनुकूलम् । भगवान् बादरायणः महाभारते-पर्वान्तैः पौलोमास्तिकादिशब्दैरल्पविभागान्, तादृशैः आदिसभादिशब्दैरनल्पविभागांश्चोररीचकार, इमे व्यासमुनयोप्यल्पानल्पोभयगणघटितानां नामस्वन्तमप्रतिकूलार्थं वादशब्दमेवानुमन्यन्त इत्यस्मान् प्रतिभाति । नायमध्वास्मदुपज्ञः । न्यायदीपकर्त्रैव कृतपदाङ्कः । तत्र चतुर्थपुटे अष्टमपङ्क्तौ "अत्र स्वतः प्रामाण्यज्ञप्तिवादपर्यन्तं" इति; १०८ तमपुटे ११ पङ्क्तौ "अतीतवादोक्तदिशा निःशङ्कप्रवृत्त्यर्थं, अत्र वादे उक्तदिशा" इति; ३७८ तमपुटे ६ पङ्क्तौ "व्यक्तं चैतद्वा[1]दान्ते ग्रन्थे एव" इति च पश्यामः । स्वतन्त्रवादग्रन्थे

---

[1] वर्णवादान्त इत्यर्थः.

न्यायामृतेप्यैषैव रीतिरिति, ४५९ तमपुटे ८ मपङ्क्तौ "न्यायामृते असतो निषेधप्रतियोगित्वसमर्थनवादे" इति व्याख्यनस्यास्य वाक्यविमर्शका अभ्युपगच्छेयुः। मूलेपि केषुचित्पुस्तकेषु १८४ तमपुटे ९ मपङ्क्तौ "इत्युत्पत्ति स्वतस्त्ववादे" इत्यस्ति ॥

आस्तामयं विचारः। इत्थमस्ति महावादेषु विन्यस्तानामणुवादानामियत्तानिर्णयः ॥

| | | | | |
|---|---|---|---|---|
| प्रथमे प्रामाण्यवादे | .... | अष्टादश | .... | १८ |
| द्वितीये | .... | उत्तरास्त्रयः | .... | ३ |
| तृतीये | .... | अनन्तर एक एव | | १ |
| चतुर्थे | .... | ततः षट् | .... | ६ |
| पञ्चमे | .... | उपरि द्वौ | .... | २ |
| षष्ठे | .... | अवशिष्टौ | .... | २ इति। |

## प्रतिपादनीयः.

आदावेव नामनिर्वचनाव्याजेन प्रतिपादनीयो विषयः सामान्यतः प्रदर्शितप्राय एव। केवलनैयायिकाभिधानानामनुसृतवेदानां च ज्ञानज्ञानसाधनविषये यत्रयत्र विसंवादस्तत्समीकरण एव ग्रन्थकर्तुर्मुख्योभिप्रायः। तेषांस्तेषां संपुटानां प्रकाशनवेलायां विशेषतस्तांस्तान्विषयान् प्रदर्शयिष्यामः ॥

## प्रकृतसंपुटे अयं विषयविशेषः.

प्रत्यक्षखण्डप्रत्यक्षपरिच्छेदशब्दाभ्यामपि संकेतितेस्मिन्संपुटे प्रत्यक्षज्ञानानां, तत्साधनानां, तत्प्रामाण्यानां, ज्ञेयानां च निरूपणं न्यायतः संप्राप्तम्। ज्ञानज्ञेयसाधनानि प्रमाणलक्षणपद्धत्यादिभिरेव सुखाववोधानीति प्रामाण्यमेवोर्वरितम्। तत्रापि प्रामाण्यस्वरूपविषये

न तादृशो विवादः । अपि तु कथमस्योत्पत्तिः ज्ञप्तिश्चेत्यत्रैव । अतः स एव विषयः सामान्यरूपेण विचारपथपान्थ इति सुष्ठु पश्यामः - नहि सामान्याकारेण चर्चितं प्रत्यक्षप्रामाण्यत्वादिरूपविशेषाकारेण न सिध्यति ॥

प्रत्यक्षपरिच्छेदे प्रत्यक्षप्रामाण्यविचार एवानुरूपः । न तु शाब्दप्रामाण्यादेः । सत्यम् । तत्तत्परिच्छेदे तत्तत्प्रामाण्यमेव यदि न्यरूपयिष्यत् तदा, प्रामाण्यसामान्यस्य न स्वतस्त्वम् कथं प्रामाण्यविशेषस्येति शङ्कावशिष्टाभविष्यत् । अतः प्राथम्यात्सामान्यविचारेणैव विशेषशङ्काया अपि शान्तेरत्रैव प्रामाण्यसामान्यनिरूपणं नानुपपन्न मित्युत्पश्यामः—

तत्रापि—

(क) प्रामाण्यं स्वत इति वेदान्तिनः
,, परत इति नैयायिकाः

(ख) वेदाः अपौरुषेया नित्याश्चेति वेदान्तिनः
ईश्वरोच्चरिता अनित्या इति नैयायिकाः

(ग) ईश्वरस्य सार्वज्ञ्यादिकं वेदेनैव सिद्ध्यतीति वेदान्तिनः
धर्मिग्राहकानुमानैरिति नैयायिकाः

(घ) वर्णाः नित्यविभुद्रव्याणीति वेदान्तिनः
अनित्या गुणा इति नैयायिकाः

(ङ) वर्णः संयोगेन ज्ञेय इति वेदान्तिनः
समवायेनेति नैयायिकाः

(च) निर्विकल्पकज्ञानं नास्तीति वेदान्तिनः
अस्तीति नैयायिकाः

इति षोढा विप्रतिपत्तयः सन्ति । तत्र निर्णयायैव षण्णां वादानामङ्गी-कारः ॥

प्रामाण्यविषयोयं परिच्छेद इत्युक्त्वा वेदेश्वरादीनां विचारणे कः प्रसङ्ग इति परं शङ्कोन्मीलति । तामेवं प्रतिब्रूमः ॥

प्रक्रान्ते प्रामाण्यस्वतस्त्वे याया बाधकाशङ्काः समापतन्ति तासामसमीकरणे सिद्धान्तस्य न सुस्थापना भविष्यतीति वादपञ्चकानां समाश्रयणमिति । ततश्चैवं पूर्वपूर्ववादानामुत्तरोत्तरवादानुषङ्गिता ॥

ज्ञानज्ञानसाधनानां प्रामाण्यस्वतस्त्वे निरूपणीये वेदेपि तदनु-वर्तमानं वेदनित्यत्वापौरुषेयत्वाभ्यां सुव्यवस्थापितम् । वेदस्य पौरुषेय-त्वादिदमसंगतमिति शङ्कापनोदाय द्वितीयस्य वेदापौरुषेयत्ववादस्य रचना । पौरुषेयत्वे यानुपपत्तिस्तामेवं परिहरामीति प्रतिवादिनः प्रत्यव-स्थाने तृतीयस्य वादस्यारम्भः । वर्णानामनित्यत्वात्तत्समुदायरूपवेदा-नामप्यानित्यत्वमिति प्रश्ने; शब्दोनित्यविभुद्रव्यं, ध्वनिराकाशगुणः, इति प्रतिपादयतश्चतुर्थस्य । यदि शब्दो नाकाशगुणः तर्हि श्रोत्रेणा-काशेन न समवायसंबन्ध इति कस्तं श्रोत्रेण जानीयादिति कोलाहल-प्रशमनाय समवायानिषेधयितुः पञ्चमस्य । समवायाभावे निर्विकल्पक-सविकल्पकभेदेन प्रत्यक्षप्रमाद्वैविध्यमुन्मूलितं भवतीत्युद्घोषस्य स्वेष्टतां प्रथयतः षष्ठस्य चेति ॥

## प्रतिपादनपरिपाटी.

विषयचालनरीतिमेकदेशे प्रामाण्यवादे दिक्प्रदर्शनेन प्रदर्श-यिष्यामः ॥

"स्वतःप्रमाणैः" इतिश्लोके प्रामाण्यस्य स्वतस्त्वं प्रक्रान्तम् । प्रमाणशब्दः यदि भावसाधनस्तदा प्रामाण्यं ज्ञानधर्मः । अथ

करणसाधनस्तर्हि ज्ञानसाधनधर्मः । द्विविधेप्यास्मिन् प्रामाण्ये ज्ञप्तौ स्वतस्त्वं, उत्पत्तौ स्वतस्त्वं चेति द्वयीरितिरस्ति । अन्ततो ज्ञान-गतस्य ज्ञप्तौ स्वतस्त्वं उत्पत्तौ स्वतस्त्वं; करणगतस्य ज्ञप्तौ स्वतस्त्वं, उत्पत्तौ स्वतस्त्वं चेति चातुर्विध्यमागतम् । क्रमश एषां निरूप-णमारच्यते ॥

तच्च—

किं तत्स्वतस्त्वं नाम ?

प्रकारान्तरे कानुपपत्तिः ?

किं प्रमाणम् ?

अनुपपत्तीनां कथं परिहारः ?

परतस्त्वं कुतो न ?

इति शङ्कोत्तराभ्यां सुरुचिरं भविष्यतीति तथैवानुधावति विचारणाप्रवाहः ॥

सर्वत्रापि स्वतस्त्वं नाम सहजत्वं, औत्सर्गिकत्वं वा, न त्वितरा-पेक्षणेनाहितत्वमितिसारम् । अत एव द्वादशतमे पुटे "सहजत्वात् प्रामाण्यग्रहणस्यौत्सर्गिकत्वरूपस्वतस्त्वासिद्धि" रिति, २०३ तमपुटे, "प्रमाजननशक्तिः सहजा नतु भ्रमजननशक्तिवदाधेये" ति चास्ति ॥

१. ज्ञानप्रामाण्यस्य ज्ञप्तौ स्वतस्त्वम्—

एतच्च त्रिधा निरवक् । "याथार्थ्यरूपस्य तत्तज्ज्ञानप्रामाण्यस्य ग्राह्यप्रामाण्यविरोध्युपस्थापकसामग्र्यसमवहितग्राह्यप्रामाण्याश्रयतत्तज्ज्ञान-विषयकसाक्षिज्ञानविषयत्वनैयत्यम्" इत्येकम् । "तत्तज्ज्ञानप्रामाण्यस्य ग्राह्यप्रामाण्याश्रयतत्तज्ज्ञानविषकसाक्षिज्ञानविषयत्वयोग्यत्वम्" इत्यपरम् । नैयायिका यदाकारं ज्ञानमनुव्यवसायं मन्यन्ते तदेवात्र साक्षिशब्दितम् । स साक्षी यदि ज्ञानं गृह्णीयात् तर्हि तत्प्रामाण्यमपि गृह्णात्येव ।

यथा स्वयं गन्तुर्गजस्य कण्टकापसरणं प्रयोजकमेव न तु कारणं तथा प्रामाण्यविरोध्युपस्थापकनिवारणमपि। इति प्रथमनिरुक्त्या पर्यवसितोर्थः। द्वितीयया तु अग्नेर्दाहकशक्तिवत् साक्षिणि प्रामाण्यग्रहणशक्तिरस्ति। अग्नेः प्रतिबन्धकाददाहकत्ववत् अस्यापि प्रामाण्याविषयता। तथापि करतलादौ दाह्यतावत् प्रामाण्येपि साक्षिग्राह्यता। इति साक्षिविषयतायोग्यत्वं स्वतस्त्वमिति फलितम्। तृतीया निरुक्तिस्तु न स्वमतासाधरणेत्यास्ताम्॥

२. प्रकारान्तरे अनुपपत्तिः—

"तदप्रामाण्याग्राहकयावज्ज्ञानग्राहकसामग्रीग्राह्यत्वं स्वतस्त्वम्। तदभावश्च परतस्त्वम्। इति मणौ पूर्वपक्षे मीमांसकानां स्वतस्त्वं निरुक्तम्। तस्यात्रान्ततो दूषणमिदमभिहितमस्ति। 'तत्' इति शब्देन प्रकरणप्राप्तघटज्ञानं यत्र जायते तत्र तत्प्रामाण्यं न भासते, ज्ञानं परं प्रतीयत इति बाध इति॥

तज्ज्ञानविषयकज्ञानाजन्यजन्यज्ञानाविषयत्वमिति परिष्कारोपि केनाप्यजन्येश्वरज्ञानेन स्वेष्टस्यानुव्यवसायस्यापि जन्यत्वादनुपपन्नार्थकः॥

अतः तज्ज्ञानविषयक जन्यज्ञानेत्याद्युक्तौ, उभयत्र जन्यपदत्यागेन अजन्यत्वस्य स्वानुकूलतया निर्वचने वा बाधादिदोष एवोक्तः। सर्वं ज्ञानं गुण इति वाक्ये प्रयुक्ते तादृशमेव शाब्दज्ञानं जायते। तदनुव्यवसायेन तत्प्रामाण्यमवगाह्यत इति स्थितिः। अयमनुव्यवसायः अत्र यद्विशेषणमुक्तं तादृशो न भवतीति सारम्॥

३. स्वतस्त्वे प्रमाणम्—

"ज्ञानप्रामाण्यं स्वतो ग्राह्यं परतोऽगृह्यमाणत्वे सति गृह्यमाणत्वात् यद्यदन्येनागृह्यमाणत्वे सति ग्राह्यं तत्तेन ग्राह्यं यथा चक्षुरन्येनागृह्यमाणं

रूपं चक्षुर्ग्राह्यम्" इत्यादि प्रथमस्वतस्त्वनिरुक्त्यनुरोधेन; "विमतोऽनु व्यवसायः स्वग्राह्यज्ञानप्रामाण्यविषयीकरणयोग्यः अनुव्यवसायत्वात् गृहीतप्रामाण्यसमानविषयकज्ञानान्तरानुव्यवसायवत्" इत्यादि द्वितीयानुरोधेन चोक्तम् ॥

केवलतर्कसरण्या प्रतिपादितानां विषयाणां ललितवचनानुवादो न सुकरः सूपयुक्तश्चेति तांस्तथैव परित्यजामः ॥

४. प्रामाण्यस्वतस्त्वे अनुपपत्तिपरिहारः—

इदं रजतं जानामीत्येकोऽनुव्यवसायः। एतदनन्तरं रजतं ज्ञाने प्रकारो वा न वेति न संदेहः। अतः रजतत्वप्रकारकत्वं न बहिरर्थः। अनुव्यवसायस्य विषयश्चैतत्। रजतत्वविशिष्टं न वा इति संदेह उदेति। अतो रजतत्ववैशिष्ट्यं बहिरर्थः। नानुव्यवसायविषयः। रजतत्व वैशिष्ट्यादिकं प्रामाण्ये प्रविष्टमास्ते। अतः कथं प्रामाण्यस्वतस्त्वसाधकानुमानैः प्रामाण्यमनुव्यवसायविषय इति साधनम्? एवं बाधादिति शङ्कायाम्; व्यवसाये रजतत्ववैशिष्ट्यग्राहित्वं केन प्रमाणेन सिद्ध्यति-अनुव्यवसायेनेति ब्रूयात्। यद्यनुव्यवसायः तदविषयः तस्य सिद्धिरेव? न स्यादिति दिशा परिहारः ॥

५. ज्ञाने जाते प्रथमतः प्रमाणं न वेति संशयो भवति। स नोदियात्। ज्ञानग्रहणवेळायामेव प्रामाण्यस्यापरित्यागात्। इत्यन्यानुपपत्तिः। प्रतिबन्धकाभाव एव प्रामाण्यग्रहणनियम उक्तः। न तु प्रतिबन्धकसत्त्वे। प्रामाण्यसंशयस्थळे विरोधी वर्तत इति न प्रामाण्यं विषयो भवति, अतः संशयः इत्यादिदिशा परिहारः ॥

६. प्रामाण्यस्वतस्त्वे ये हेतव उक्तास्ते सन्तु, साध्यामाभूवन् इत्यप्रयोजकशङ्काया इत्थं परिहारः। महति कार्ये यागादौ निष्कम्प-

प्रवर्तितुं वेदादौ प्रामाण्यमवश्यवेद्यम् । तथाचैकस्मिन् प्रामाण्यमितरेण, तत्रान्येन, तत्रापरेणेत्यनवस्था स्यादिति परतस्त्वं प्रामाण्यस्य परित्यज्य स्वतस्त्वमेवाभ्युपेयमिति ॥

### परतस्त्वं कुतो न?

७. प्रामाण्यपरतस्त्वे अप्रामाण्यशङ्कापरिहरणाय प्रामाण्यनिश्चयावश्यकतया उक्तरीत्यानवस्था एको दोषः ॥

८. प्रामाण्यमनुमेयं चेत् कथं प्रथमतः प्रामाण्यज्ञानं, साध्याप्रसिद्धेरित्यपरो दोषः ॥

९. "स्वाश्रयविषकनिश्चयावधिकतृतीयक्षणवृत्तिसमानाधिकरणसंशयविषयीभूतं ज्ञानप्रामण्यं, ग्राह्यज्ञानप्रकारप्रकारतया तद्विशेष्यकतया च स्वाश्रयग्राहकयावज्ज्ञानाग्राह्यं, स्वाश्रयविषयावधिकतृतीयक्षणवृत्तिसमानाधिकरणसंशयकोटित्वात्, अप्रामाण्यवत्" इत्यस्य—अप्रामाण्यं स्वतो न गृह्यते । ज्ञानानन्तरं तृतीयक्षणे अप्रामाण्यसंशयोदयात् । तथा प्रमानन्तरं तृतीयक्षणे क्वचित्प्रामाण्यसंशयोदयात्प्रामाण्यमपि न स्वतः इति सारम् । इत्यपरः प्रत्युद्गमः । तस्येत्थं परावर्तनम् । अत्र साध्ये स्वाश्रयग्राहकयावज्ज्ञानपदं स्वेष्टामनुमितिमपि सङ्गृह्णातीति तदग्राह्यत्वसाधनमपसिद्धान्तदोषकबलितम् । बाधो व्याघातश्चेति । रीत्यानयैवानुमानान्तराण्यपि दुष्टानीति ज्ञानप्रामाण्यस्य ज्ञप्तौ परतस्त्वशङ्का न सुस्थिरा ॥

### उत्पत्तौ ज्ञानप्रामाण्यस्वतस्त्वम्.

अस्मिन् स्वतस्त्वनिर्वचने न तादृशः प्रयासः । पूर्वपक्षानुमानेनैव साध्यविपरीतस्य तस्य सुखावबोधो भविष्यतीत्यत्र तदनिरुच्य

१५४ तमपुटे अष्टमपङ्क्तौ "ज्ञानजनकमात्राधीनजन्मत्वं स्वतस्त्व" मित्युक्तम् ॥

पूर्वस्मिन् स्वतस्त्वनिरूपणे अनुकूलान्युक्त्वा प्रतिकूलानां परिहरणमित्यनुलोम आदृतः। इदानीं प्रतिकूलानि परिहृत्यानुकूलानां निरूपणमिति प्रतिलोम आद्रियते ॥

तथाचादौ परतस्त्वनिरासः.

१०. अनित्यप्रमा ज्ञानहेत्वतिरिक्तहेतुजन्या कार्यत्वे सति तद्विशेषत्वात् अप्रामाण्यवत् । इत्यादीन्यनुमानानि परतस्त्वसाधकानि वर्तन्ते । यथा अप्रमा कार्यं ज्ञानविशेषोपीति सा ज्ञानसामान्यकारणातिरिक्तदोषजन्या तद्वदनित्यप्रमापि गुणादिजन्येति तदर्थः । इति शङ्का॥

प्रमा ज्ञानं हि । तस्या हेतुर्ज्ञानहेतुरिति निर्विवादम् । एवमपि तदतिरिक्तहेतुजन्यत्वं यदि साध्यते तर्हि भवदनुमानेषु विरोधो वाधश्च । प्रमायाः कार्यतां निर्वहन् कश्चनगुणोपि नास्ति । एवमेवेतराण्यनुमनान्यपीतीदं दिक्प्रदर्शनमात्रम् । इति परिहारः ॥

११. यद्यपि प्रमामात्रे गुणः सामान्यो मा भूत् । अनित्य प्रमामात्रे अविद्यमानासंसर्गाग्रहादिकं गुणः । इति चारु दर्शयते ॥ तथापि केवलासंसर्गाग्रहस्य भ्रमेपि सुलभतया अविद्यमानविशेषणेन विषयसत्त्वमेवाभिप्रेतं ब्रूयात् । विषयसत्त्वं तु ज्ञानसाधारणकारणम् । अतः न तत्स्वतस्त्वविरोधि ॥

१२. मास्त्वेकोऽनुगतो गुण अनित्यप्रमासु । अननुगतैरनेकैरेव प्रमोत्पद्यताम् । "अनित्यप्रमात्वं स्वाश्रयमात्रवृत्तिधर्मावच्छिन्नकार्यताश्रयमात्रवृत्ति स्वाश्रयमात्रवृत्तिधर्मावच्छिन्नकार्यताप्रातियोगिककार-

णत्वाश्रयमात्रानुत्पाद्यकार्यमात्रवृत्तिधर्मत्वात् अप्रमात्ववादित्यनुमानं तत्र बलमस्ति। अप्रमात्वं अनित्यज्ञानसामान्यकारणापेक्षया अधिकं कारणमपेक्षते यत्कार्यं तन्मात्रस्थितिकम्। अतस्तत्; स्वाश्रयजन्यभ्रमवृत्तयः येये धर्माः जन्यप्रत्यक्षभ्रमत्वादयः तत्तदवच्छिन्नकार्यताश्रयाः जन्यप्रत्यक्षभ्रमादयः। तन्मात्रे वर्तते। एवं च—अनित्यभ्रम इति नैकजातीयं कार्यम्। अपितु प्रत्यक्षानुमित्यादिभेदेन नाना। तदनुरोधेन कारणान्यप्यनेकान्येवेति फलितम्। तथैवानित्यप्रमा अपि नाना कार्याणि। तत्तत्कारणान्यपि नानैव। तत्तदनुरूपा गुणास्तत्रतत्र कारणानीति पर्यवसितम्॥

इयं यज्ञपत्युक्तपञ्चमात्रपदानुमानतः शङ्का। अस्या इत्थं परिहारः॥

सन्तु नामानित्यप्रमाकारणानि नाना। न तानि गुणाः। अपितु अस्मदनुमतास्तत्तत्प्रमाप्रागभावा एव। तथाप्युक्तानुमाने साध्यहेतुसंगतेः। अतः सिद्धसाधनं दोषः। इति॥

१३. अनित्यप्रत्यक्षप्रमात्वं कार्यतावच्छेदकम् बाधकं विना कार्यमात्रवृत्तित्वात् घटत्ववत्। घटत्वं कार्यमात्रे वर्तते। अतस्तत् कार्यतावच्छेदकम्। एवमनित्यप्रत्यक्षप्रमात्वमपि स्यात्। अनित्यानुमितिप्रमात्वे शाब्दप्रमात्वे चायमेव क्रमः। इत्यपरा शङ्का॥

प्रत्यक्षप्रमामात्रे इन्द्रियसन्निकर्षोऽर्थश्च न हेतू। यदा शुक्तिं दृष्ट्वा रजतमिति भ्राम्यति तदा सन्निकर्षस्य शुक्तिरूपार्थस्य च तत्र सत्त्वेन शुक्तिरियमिति प्रमोदयापत्तेः। दोषः शुक्तिं न भासयतीति यदि, तर्हि दोषाभाव एव प्रमायामुपयोगी भवतु। अपरं कारणं मास्तु। इत्युत्तरम्॥

१४. अनित्यप्रमात्वं, अनित्यज्ञानत्वप्रयोजकं यावत् तदधिकप्रयोजकापेक्षं अधिकप्रयोजकसत्त्वे उत्पत्तेः अधिकप्रयोजकासत्त्वे अनुत्पत्तेः अप्रमात्ववत् । इत्यनुमानेन स्थूलावयववतो वस्तुनः प्रत्यक्षप्रमायां भूयोऽवयवेन्द्रियसन्निकर्षः कारणम् । संशयविपर्ययोत्तरस्मिन् तस्मिन् विशेषप्रमा कारणम् । नियमेन प्रमारूपायामनुमितौ लिङ्गपरामर्शः कारणम् । तादृशायां शाब्दप्रतीतौ वाक्यार्थज्ञानं कारणम्' इति फलति इति पूर्वपक्षे ॥

कामिलारोगिणः शङ्खे शङ्खत्वशुक्लत्वज्ञानं भूयोऽवयवेन्द्रियसन्निकर्षश्च वर्तेते । तथापि शङ्खं पीतं भ्राम्यति । न तु शुक्लं प्रमिनोति । अतः कारणमस्ति कार्यं नैवेत्यन्वयव्यभिचारो दोषः । पुरोवर्तिनि स्थाणुर्वा पुरुषोवेति संशयः । ततः करादिकं चरणादिकं मत्वा पुरुष एवेति निश्चयो भवति । सा प्रमैव । संशयोत्तरस्मिन्नस्मिन्प्रमाज्ञाने भवदभिमतस्य विशेषप्रमारूपस्य कारणस्य क्व प्रसक्तिः? नास्ति। अतः कारणं नास्ति कार्यमुत्पन्नमिति व्यतिरेकव्यभिचारोपि। इति समाधानम्॥

१५. दोषाभाव एव कारणमास्ताम् । तथापि प्रामाण्यस्वतस्त्वहानेरीति न सुस्थायि । दण्डत्वदण्डगतदार्ढ्य प्रमुखानां कार्योपयोगित्वेपि कारणत्वाभाववदिहापि निर्वाहात् ॥

इयता प्रामाण्यस्योत्पत्तौस्वतस्त्वे अनुपपत्तयोपि परिहृता एव ॥

### प्रामाण्यस्योत्पत्तौ स्वतस्त्वे किं प्रमाणम्

१६. अनित्ययथार्थज्ञानत्वं अनित्यज्ञानत्वानवच्छिन्न कार्यतानवच्छेदकम् अनित्यज्ञानावृत्तित्वरहितत्वात् ज्ञानत्ववत् । इत्याद्यनुमानं मानम् । ज्ञानत्वं अनित्यज्ञानावृत्ति न । अतस्तदवृत्तित्वरहितम् । तस्मादनित्यज्ञानत्वविशिष्टे सर्वत्र वर्तते या कार्यता तस्यामन-

वच्छेदकम् । ज्ञानत्वेन रूपेण ज्ञानमुत्पन्नमिति न भाष्यत इत्यर्थः । एवमेव अनित्ययथार्थज्ञानत्वमपि अनित्यज्ञाने न वर्तत इति नहि । ततः अनित्यज्ञानसामान्ये वर्तते या कार्यता तस्यामनवच्छेदकम् । अनित्ययथार्थज्ञानत्वादिना रूपेण ज्ञानं जायत इति नाह्वाययते । इतीदमस्योपपादनम् । एवं च ज्ञानजनने यावदपेक्षितं तदधिकं कारणं प्रमा नापेक्षत इति फलितम् । तथा च १५४ तम पुटे अष्टमपङ्क्तौ "ज्ञानजनकमात्राधीनजन्मत्वं" इत्युक्तस्वतस्त्वसिद्धिः ॥

१७. अप्रमात्व (भ्रमत्व) मपि स्वत एव स्यात् । दोषस्तु प्रमायां गुण इव भवतु । इति प्रतिबन्दीत्थं परिहरणीया । दोषसत्त्वे भ्रमः, दोषाभावे न भ्रमः; इत्यन्वयव्यतिरेकयोर्न कथं कथमपि परित्याज्यतेति दोषोऽप्रमाकारणमित्यवर्जनीयमेव ॥

### करणप्रामाण्यस्वतस्त्वम्.

ज्ञानप्रामाण्यस्वतस्त्वे वादप्रतिवादाभ्यामेव करणप्रामाण्यस्वतस्त्वेपि प्रतिभटपरावर्तनं सुशकमिति तदर्थमत्र पृथङ्नायासः ॥

१८. यथार्थज्ञानसाधनत्वमेव करणप्रामाण्यम् । तस्य ज्ञानजनकत्वग्राहकमात्रग्राह्यत्वम् ज्ञप्तौ स्वतस्त्वम् । करणेषु ज्ञानजननशक्तिर्यथा सहजा तथा यथार्थज्ञानजननशक्तेरपि सहजत्वम्, तदभिन्नत्वं वा उत्पत्तौ ॥

एतत्सर्वं "प्रामाण्यं स्वत एव अन्यथानवस्थानात्" "परतोऽप्रामाण्यम्" इति तत्त्वनिर्णयस्य विवरणरूपमेव ॥

आदित एतावत्प्रबन्धेन—

"स्वतः प्रमाणैराम्नायै रादरेणादिवर्जितैः ।
आख्यातानन्तकल्याण गुणं श्रीरमणं भजे" ॥

इति देवतागुरुनमनोत्तरमत्रोक्तप्रस्तावनाश्लोकेन आदिवर्जितस्वतः- प्रमाणवेदोदितानन्तकल्याणगुणः श्रीरमण इति यदुपदर्शितं तन्नानुपपन्नम् । अपौरुषेयत्वेपि वेदस्य सहजप्रामाण्यानपायात् । इति पर्यवसितम् ॥

अतः प्रामाण्यवादान्ते तस्मात्प्रामाण्यस्य स्वत्वस्त्वादपौरुषेयोपि वेदः प्रमाणमेव " इत्युपसंहारमदर्शयत् ॥

## व्याख्याविचारः.

अस्य ग्रन्थस्य द्वे व्याख्ये हस्तगते—

१. युक्तिरत्नाकराख्या एका

२. न्यायदीपाख्या इयमपरा

युक्तिरत्नाकरकारा विजयीन्द्राः । मूलकाराणामन्तेवासिनो न्यायदीपकाराणां विद्यागुरवः आश्रमतः परमगुरवश्च । इयं व्याख्या शब्दतोपि विशाला । न्यायदीपे चतुर्थपुटे "अत्र स्वतःप्रामाण्यज्ञप्तिवादपर्यन्तं विस्तरस्तु गुरुपादकृतयुक्तिरत्नाकरे द्रष्टव्यः" इत्यास्ति । इयं सम्पूर्णा उत इयत्येवेति सन्दिहामहे । पूर्णेयं विस्तरस्तु एतावत्येवेत्यनेनापि न्यायदीपोक्तिसंगीतर्भवति हि । नोपलभामहे च सम्पूर्णाम् । अतोऽपूर्णेत्यत्रैव पक्षपातो न्याय्यः ॥

अत्र—

"गुरुपादकृताप्यस्ति व्याख्या सात्यन्तविस्तरा ।
व्याख्येयं मन्दबोधाय क्रियतेऽशेषगोचरा" ॥

इति । न्यायदीपादिस्थितद्वितीयश्लोकोपि प्रमाणम् ॥

अस्या न्यायदीपाख्यायाः कर्तारो राघवेन्द्रस्वामिनः । अत्र न कोपि प्रतिवादः ॥

एतेषां जीवनचारित्रविषये राघवेन्द्रविजयाख्यं काव्यं, गुरुगुण-स्तवाख्यं स्तोत्रं च मुद्रितमेवेदानीमस्ति । गुरुगुणस्तवकर्तारो राघवे-न्द्रस्वामिनां पूर्वाश्रमे पौत्राः यत्याश्रमे प्रशिष्या वादीन्द्राः ॥

मूलकाराणां छात्रा विजयीन्द्राः, तेषां राघवेन्द्राः ' इत्यनेनैषां कालोपि विवृतप्राय एव । एषां बृन्दावनं रायचूरुपुरसमीपवर्तिनि मन्त्रालयाख्यग्रामे भक्तेष्टवितरणविचक्षणो विराजते । इमे इतरसन्यासिन इव मरणानन्तरं न बृन्दावनं प्रवेशिताः । अपि तु सर्वदृग्विषयतापरि-तित्यक्षिषवो बृन्दावनं कल्पयित्वान्तरुपाविशन् । प्यधापयंश्च । इति सांप्रदायिकानां तथ्यवादः ॥

मध्वसिद्धान्तस्यैभिः कृतमुपकारमेवं स्मरन्ति—

"व्यासेन व्युप्तबीजः श्रुतिभुवि भगवत्पादलब्धाङ्कुरश्रीः
प्रत्नैरीषत्प्रभिन्नोऽजनि जयमुनिना सम्यगुद्भिन्नशाखः ।
मौनीशव्यासराजादुदितकिसलयः पुष्पितोयं जयीन्द्रा-
दद्य श्रीराघवेन्द्राद्विकसति फलितो मध्वसिद्धान्तशाखी । इति ॥

इतोप्यधिके एतदीयचरिते निर्दिष्टं काव्यं स्तोत्रं चास्तां मार्गदर्शीति शम् ॥

———

## परिशिष्टम्.

---

अस्य सम्पुटस्य मुद्रणायोपयुक्तान्यादर्शपुस्तकान्याहृत्य चतुर्दश (14). तत्र मूलपुस्तकान्यष्टौ (8). व्याख्यानस्य षट् (6) इत्थमत्र विवेकः.

### मूलस्य.

1 काङ्कम्—अस्मत्कोशागारस्य C. 13 संख्याङ्कम्. पूर्णम्.
2 गाङ्कम्— ,, C. 937 ,, ,,
3 'ख' संज्ञम्— ,, C. 1938 ,, पु. 449–पं. 1 "गुणाक्रिया" इत्यन्तम्.
4 'च' संज्ञम्—D. Sreenivasachar, M.A., Professor of Sanskrit and Curator, Oriental Library, Mysore इत्येषाम्. पूर्णम्.
5 'छ' संज्ञम्—D. Sreenivasachar, M.A., Professor of Sanskrit and Curator, Oriental Library, Mysore इत्येषाम् पूर्णम्.
6 'मु' संज्ञम्—मुळवागलुग्रामस्थश्रीश्रीपादराजस्वामिनां मठस्य पूर्णम्.
7 'कुं' संज्ञम्—कुम्भकोणपुरे मुद्रितम्. पु. 390 पं. 8 "चक्षुरादिग्राह्यत्वात्" इत्यन्तम्.
8 'रा' संज्ञम्—मैसूरुशासनागारोपाध्यक्षाणां R. रामराव्, B.A., इत्येतेषाम्. पूर्णम्.

### व्याख्यानस्य.

1 'अ' संज्ञितम्. एतत्कोशागारस्थम्. C. 306 संख्याङ्कम्. पूर्णम्.
2 'आ' ,, ,, C. 1919 ,, पु.195 प. 5 "ननु गुणव्यति" इत्यन्तम्.
3 'इ' संज्ञितम्. एतत्कोशागारस्थम्. C. 189 ,, पूर्णम्.

4 'इ' संज्ञितम्. मैसूरुराजकीयसंस्कृतमहापाठशालाद्वैतप्रधानोपाध्यायानां विदुषां डि. वासुदेवाचार्याणाम्. पूर्णम्. 369 पुटेभ्य उपर्युपयुक्तम्.

5 'मु' सज्ञितम्. मुळबागलुग्रामस्थोक्तमठस्य. पूर्णम्.

6 'कुं' ,, कुम्भकोणमुद्रितम्. पु. 390, पं. 3 "तार्किक" इत्यन्तम्.

विना 'कुं' पुस्तकं सर्वाणीमानि प्राचीनान्येव. 'च-छ-मु' संज्ञानि तु प्राय अत्यन्तं शुद्धानि. अध्ययनाध्यापनपरिष्कृतानि च कादिचिन्हं विना पाठान्तरदर्शकाटिप्पण्यां क्वचित्प्रदर्शितान्यस्माभिः सम्भावितानि.

व्याख्यानस्य 3, 4, पुस्तकयोः 'इ' इत्येक एव सङ्केतः कृतः. उभयोः प्रायः सारूप्यमत्र कारणम्.

———

# तर्कताण्डवप्रथमसम्पुटविषयानुक्रमणिका.

---

---

# तर्कताण्डवप्रथमसंपुटे ग्रन्थकृन्नामानि.

---



---

# तर्कताण्डवप्रथमसम्पुटोद्धृतानि ग्रन्थनामानि.

# तर्कताण्डवप्रथमसम्पुटे धृता ग्रन्थानुपूर्व्यः

———

# शुद्धाशुद्धपत्रिका.

| पुटम्. | पङ्क्तिः | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| 16 | 23 | सुथा | सुधा |
| 19 | 1 | ज्ञाननां | ज्ञानानां |
| ,, | 9 | अप्रमामा | अप्रामा |
| ,, | 18 | चोत्त | चोत्प |
| 22 | 13 | स्वाश्रप्र | स्वाश्रयप्र |
| 25 | 21 | विषयता | विषयतया |
| 27 | 16 | रनु | रानु |
| 29 | 17 | कोनुऽव्य | कोऽनुव्य |
| 30 | 15 | प्रग | प्राग |
| 34 | 20 | विशिशेण | विशेषण |
| 36 | 3 | (प 8) | (प 4) |
| ,, | 18 | यस्म | यस्य |
| 40 | 11 | वन्दिका | वन्धिका |
| 41 | 7 | सुस्व | सुख |
| 42 | 16 | वेत्ति | वेति |
| 46 | 17 | तद्द | तदृ |
| 51 | 6 | नुव्यय | नुव्यव |
| 52 | 4 | व्वतिरेक | व्यतिरेक |
| 55 | 9 | द्दष्टान्त | दृष्टान्त |
| 63 | 13 | तद्वद्दि | तद्वद्धि |
| 64 | 10 | व्यॅव | व्यव |
| 76 | 18 | व्यसाय | व्यवसाय |
| 83 | 1, 2 | वयध्य | वध्य |
| 84 | 6 | “ अप्रा | अप्रा |

| पुटम्. | पङ्क्तिः | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| 84 | 8 | हानिः " | हानिः |
| 85 | 8 | स्त्वाहानेः | स्त्वहानेः |
| 86 | 4 | दप्यते | दप्येते |
| 88 | 20 | स्मतस्त्व | स्वतस्त्व |
| 89 | 19 | संशवान् | संशयवान् |
| 94 | 7 | यत्वेकः | यस्त्वेकः |
| 106 | 16 | निरहि | निराह |
| 111 | 10 | स्वर्थानु | स्वार्थानु |
| 122 | 11 | कल्ये | केत्य |
| 124 | 8 | र्थलक्ष | र्थेक्ष |
| 127 | 9 | सवत्र | सर्वत्र |
| 138 | 11 | मप्राणं | मप्रमाणं |
| 143 | 19 | निर्दष | निर्दोष |
| 149 | 18 | योस | योऽस |
| 150 | 3 | णाय | णाया |
| 152 | 8 | पदत्तेः | पपत्तेः |
| 157 | 18 | अतित्य | अनित्य |
| 160 | 1 | पादा | पदा |
| 166 | 17 | ङ्कते | शङ्कते |
| 181 | 6 | पूर्वक्त | पूर्वोक्त |
| 187 | 4 | नीस्य | नीयस्य |
| " | 11 | नयो | नायो |
| " | 18 | रित्यें | रीत्ये |
| 204 | 1 | प्रमाण्य | प्रामाण्य |
| 207 | 6 | त्रत | तत्र |
| 228 | 3 | सादिता | दिता |
| 235 | 7 | त्रेव | त्रैव |
| 237 | 9 | प्रक्ष | प्रत्यक्ष |
| " | 19 | विशेण | विशेषण |
| 239 | 3 | सर्वज्ञय | सर्वज्ञ |

| पुटम्. | पङ्क्तिः | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| 241 | 10 | स्तवज्ञा | स्तज्ज्ञा |
| 242 | 20 | कण | करण |
| 243 | 11 | माङ्क्य | माशङ्क्य |
| 246 | 14 | ल्पीये | ल्पीय |
| 250 | 19 | स्सृतिः | स्मृतिः |
| 251 | 11 | 29 | 19 |
| 254 | 5 | दिशाति | दिशति |
| 256 | 20 | तयद्दो | तद्दो |
| 258 | 15 | श्रुति | श्रुति |
| 263 | 2 | क्रमणो | क्रमेणो |
| 264 | 11 | सुनिनां | मुनीनां |
| 267 | 16 | यज्ञानं | यज्ज्ञा |
| 268 | 21 | प्राण्थ | प्रामाण्य |
| 273 | 15 | उद्बोद्ध | उद्बोद्धृ |
| 275 | 4 | दोषण | दोषेण |
| 276 | 11 | वलेन | बलेन |
| 277 | 3 | च्छुति | च्छुति |
| ,, | 8 | र्विकत्व | र्वैकत्व |
| 279 | 18 | वशीय | वशीयं |
| 283 | 1 | वितस्य | विरतस्य |
| 286 | 20 | दुपदा | दुपादा |
| 287 | 17 | उत्तरा | उत्तराः |
| 288 | 9 | तन्निव्य | तन्निवृ |
| 298 | 16 | मानाभा | मानभा |
| ,, | 17 | स्यैव | स्येव |
| 299 | 18 | र्वाच्या | र्वाच्यो |
| 307 | 16 | योऽय | योऽवय |
| 310 | 15 | परमणु | परमाणु |
| 319 | 21 | दिभावः | दितिभावः |

| पृष्टम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 328 | 22 | वथितो | वस्थितो |
| 334 | 3 | मदच्छे | मवच्छे |
| 341 | 13 | दाच्यम् | वाच्यम् |
| 348 | 1 | वए | एव |
| 360 | 18 | शेण | शेषण |
| 362 | 11 | पिप | दिप |
| ,, | 15 | व्यहा | व्यवहा |
| 363 | 18 | इत्यदि | इत्यादि |
| 366 | 13 | रूपावया | रूपावयवा |
| 390 | 7 | ता । सिद्धा | ता सिद्धा । |
| 392 | 4 | लाको | लोका |
| 403 | 18 | व्क्ते | व्यक्ते |
| ,, | 20 | यवा | यावा |
| 404 | 17 | स्तेवं | स्त्वेवं |
| 410 | 21 | सयुक्ति | सयुक्तिक |
| 412 | 3 | धन्वि | ध्वनि |
| ,, | 18 | दाषेः | दोषः |
| 416 | 3 | ज्ञनां | ज्ञानां |
| 421 | 12 | कालयो | कालत्वयो |
| ,, | 20 | द्राप्यं | द्व्याप्यं |
| 425 | 5 | त्वीदावव्यभ | त्वादावव्याभि |
| ,, | 19 | कव | केव |
| 426 | 6 | घ्र्णे | घ्राणे |
| 427 | 8 | विची | वीचि |
| 432 | 8 | गाह्य | ग्राह्य |
| 436 | 16 | वाकस्येव | वारकस्येव |
| 438 | 9 | घत | घात |
| 440 | 2 | मग | म |
| 444 | 17 | ह्येक | ह्यैक |
| 445 | 11 | वदस | वदयंस |

| पुटम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 447 | 13 | कर्तै | कर्त्रै |
| 449 | 15 | राया भाव | राय भाव |
| 450 | 4 | सध्य | साध्य |
| 452 | 13 | क्त एव | क्ते एव |
| 456 | 16 | वा अविशि | वा विशि |
| 462 | 4 | मिति । न | मिति न |
| 463 | 14 | यद्वयै | यद्वै |
| 470 | 13 | प्रतक्तेः | प्रसक्तेः |
| 480 | 3 | नेनं | नेन |
| 486 | 18 | वद्वे | वदेवे |
| 487 | 13 | यत्सा | तत्सा |
| 494 | 14 | ज्ञात | ज्ञा |
| ,, | 17 | रिव | रेव |
| 496 | 10 | त्वेव | त्वैव |
| 499 | 8 | स्था | स्या |
| 502 | 12 | ससं | संस |

287 पुटे "स्वजनकादृष्टोत्तरोपादानगोचरापरोक्षज्ञानचिकीर्षा-कृतिमज्जन्यानि वा" इति लुप्तम्.

3 पुटे, "वेदास्ते" इत्यारभ्य "तत्त्वनिर्णयोक्तेः" इत्यन्तं "आख्याततेति" इत्यतः प्राक् स्यात्.

———

## तर्कताण्डवस्थाणुवादानां नैजानि सङ्कोचितानि च नामानि.

———

तत्त्वम्, सत्त्वम्, आपत्त्या, व्यावृत्त्या, असिद्ध्या, इत्यादिषु क्वचित् तद्व्यसंयोगः दधसंयोगश्च प्रच्युतः। अयं मुद्रणेषु प्रायः सार्वत्रिको दोष इति अनुभवरसिकानुदारमानसान्न व्याकुलयेदित्याशासे ॥

———

# तर्कताण्डवम्.

## प्रथमःपरिच्छेदः

॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवायनमः ॥

॥ ॐ ॥

अनन्तकल्याणगुणैकराशिमशेषदोषोज्झितमप्रमेयम् ।
मुमुक्षुभिः सेव्यमनन्तसौख्यप्रदं रमेशं प्रणमामि नित्यम् ॥ १ ॥

---

### न्यायदीपाख्याव्याख्या.

विश्वोत्पत्तिस्थितिध्वंसकारणं रमणं श्रियः ।
प्रणम्य पूर्णबोधादीन् व्याकुर्वे तर्कताण्डवम् ॥ १ ॥
गुरुपादकृताप्यस्ति व्याख्या साऽत्यन्तविस्तरा ।
व्याख्येयं मन्दबोधाय क्रियतेऽशेषगोचरा ॥ २ ॥

ग्रन्थादौ[1] विशिष्टेष्टदेवतानतिरूपं मङ्गलमाचरति—अनन्तेति। सत्वादिषु गुणत्वप्रसिद्धेर्दुःखादीनां गुणत्वेन परैः परिगणनाच्च तद्व्युदासाया-नन्दज्ञानबलद्युतिप्रभृतिशुभधर्मलाभाय कल्याणगुणेत्युक्तिः । तार्किकरीत्या गुणगुणिनोर्भेदभ्रमनिरासाय गुणैकराशिमित्युक्तिः । 'अष्टावेवेश्वरे गुणा' इति धीनिरासायानन्तेति। "दोषैकदृक्पुरोभागी" इत्यमरे "ह्लादैकमयीं" इत्यादिकाव्यप्रकाशादौ प्रयोगदर्शनात्संख्यार्थकस्यैवैक-शब्दस्य "पूर्वकालैक" इति पूर्वनिपातो न केवलार्थस्येति तत्वानिर्णय-

---

[1] अथादौ.—अ.

**श्रीशपादाम्बुजासक्तः करुणापूरशीतलः ।**
**मध्वाख्यो मरुदंशो मे सन्तापान्हन्तु सन्ततम् ॥ २ ॥**
**आनन्दतीर्थोपदिष्टो निधिर्नारायणाह्वयः ।**
**प्रदर्शितो येन सम्यक् जयतीर्थं तमाश्रये ॥ ३ ॥**

---

टीकाद्युक्त्या गुणैकराशिमित्यस्य साधुत्वं ध्येयम् । उक्तरूपगुणानां मुख्यराशिमिति वा भेदशून्यराशिमिति वार्थः । गुणवद्दोषो नाशङ्क्य इत्याह---**अशेषेति** । चिन्तासन्तापादिदोषहीनमित्यर्थः । ननु गुणविशिष्टस्य मायाशबलत्वात्क[1]थं दोषोज्झितत्वमित्यतो नेदं मायाशबलमिति भावेनोक्तं अप्रमेयं–देशतोऽपरिच्छिन्नमिति । शबलं तु परिच्छिन्नमित्यभ्युपेतत्वादिति भावः । तत्र हेतुर्नित्यमिति–अनिवर्त्यं । शबलं तु मिथ्यात्वान्निवर्त्यमित्यर्थः । एवं देशकालगुणानन्त्यरूपब्रह्मशब्दार्थस्यात्रोक्त्या रमेश एव ब्रह्मशब्दार्थ इति सूचितम् । अत एव मुमुक्षुभिः सेव्यं ; न तु मन्दोपास्यमित्यर्थः । किंफलं? अनन्तसौख्यप्रदं–अविनाशिसुखप्रदमित्यर्थः । स्वार्थे ष्यञ् । अत्र न्यायचिन्तापरे ग्रन्थे ब्रह्मतन्त्राध्यायचतुष्टयोक्तगुणवैशिष्ट्योक्तिः—

"प्रमाणन्यायसच्छिक्षा क्रियते तर्कशास्त्रतः ।
माननयायैस्तु तत्सिद्धैर्मीमांसा मेयशोधनम्" ॥

इत्युक्त्या ब्रह्मतन्त्रोक्तप्रमेयनिर्णयोपयुक्तप्रमाणन्यायचिन्तापरत्वात्तद्विषयादिनैवास्य विषयादिमत्तेति सूचनार्था । एवं च न्यायपञ्चाध्यायानुरोधेन कुसुमाञ्जलौ पञ्चपरिच्छेदकृतिवद्ब्रह्मतन्त्रानुरोधेन परिच्छेदचतुष्टये कार्येपि प्रमाणत्रित्वद्योतनाय परिच्छेदत्रयकृतिरिति ॥ १ ॥

देवतानतिसमनन्तरं भाष्यकर्तृनर्थयते---**श्रीशेति** । अत्राद्येन विशेषणेन

---

[1] कथमशेष.—अ.

श्रीमदानन्दतीर्थार्यस्वामिनः कमलापतेः ।
प्रीतये क्रियते व्यासयतिना तर्कताण्डवम् ॥ ४ ॥
स्वतःप्रमाणैराम्नायैरादरेणादिवर्जितैः ।
आख्यातानन्तकल्याणगु[1]णं श्रीरमणं भजे ॥ ५ ॥

---

सौरभ्यस्य द्वितीयेन शैत्यस्य अंश इति मान्द्यस्य वायुगुणस्योक्तिर्ज्ञेया॥२

टीकाकर्तॄन्नमति — **आनन्देति** ॥ ३ ॥

फलोक्तिपूर्वं चिकीर्षितं प्रतिजानीते — **श्रीमदिति** ॥ ४ ॥

आनुमानिकत्वादीश्वरात्मनो नाष्टगुणाधिकगुणवत्त्वमित्यत आद्यपद्योक्तरमेशविशेषणानि मानोक्त्या स्थिरीकुर्वंस्ताण्डवकरणस्य प्रसज्ञकं पूर्वरङ्गं निबध्नाति — **स्वत इति** । आम्नायैः — सजातीयानुपूर्वीविशिष्टवेदैः ॥ **आख्यातेति** — नित्यसापेक्षत्वात्समासः ।

"वेदास्ते नित्यविन्नत्वाच्छ्रुतयश्चाखिलैः श्रुतेः ।
आम्नायोऽनन्यथापाठात्" ।

इति तत्वानिर्णयोक्तेः । **गुणमिति** निर्दोषतादेरुपलक्षणम् । गुणपदेन वा निर्दोषत्वमुमुक्षुसेव्यत्वानन्तसौख्यप्रदत्वरूपधर्मग्रहः । आम्नायत्वे हेतुरादिवर्जितैरिति — स्वतन्त्रपुरुषाप्रणीतैरित्यर्थः । नन्वपौरुषेये वेदेऽदृष्टार्थके चाप्तोक्तत्वफलसंवादादिहेतोः प्रामाण्यनिश्चायकस्याभावात् निश्चितप्रामाण्यकस्यैव प्रमाणस्यार्थसत्त्वनिर्णायकत्वस्याग्रे प्रामाण्यनिश्चयप्रवर्तकत्ववादे व्यक्तत्वात् कथं वेदे प्रामाण्यनिश्चयः । आप्तोक्तत्वगुणाभावात्प्रामाण्यं वा कथमित्यतो "न विलक्षणत्वादस्य" इत्याधिकरणसिद्धमाह — **स्वतः प्रमाणैरिति** । करणे ल्युट् [2]ज्ञानजननशक्तिग्राहकमात्रग्राह्यप्रमाजननशक्तिमद्भिरित्यर्थः । तथा ज्ञानजननशक्तित

---

[1] गुणश्रीरमणम्.—क. [2] स्वतः ज्ञानजननशक्तिग्राहकमात्रात्.—मु.

**याथार्थ्यरूपस्य तत्तज्ज्ञानप्रामाण्यस्य**

एव प्रमाजनकैरित्यर्थः। ज्ञप्तावुत्पत्तौ चान्यानपेक्षणाज्ज्ञानजननशक्तिग्राहकेणैव प्रमाजननशक्तिग्रहरूपप्रामाण्यग्रहस्य, ज्ञानजननशक्त्यैव प्रमोत्पादक[1]त्वस्य च संभवादपवादकस्य च दोषस्य वेदापौरुषेयत्ववादे वक्ष्यमाणदिशाऽपौरुषेयेऽभावनिश्चयादिति भावः। ननु प्रमाणेनापि तात्पर्याविषयोऽर्थो न सिध्यतीत्यत उक्तं—आदरेणाख्यातेति। आङो मुख्यत्वमर्थः। तात्पर्यपूर्वं मुख्यवृत्त्योक्तेत्यर्थः। लक्षणयोदितत्वे गुणासिद्धेः। तादृशगुणे विष्णौ वेदानां शक्तितात्पर्ये इत्येतदन्यत्र व्यक्तम्। अत्र स्वतःप्रामाण्यज्ञप्तिवादपर्यन्तं विस्तरस्तु गुरुपादकृतयुक्तिरत्नाकरे द्रष्टव्यः।

वेदरूपकरणप्रामाण्यस्य स्वतस्त्वं निश्चितप्रामाण्यकज्ञानेन ज्ञातव्यम्। तथा[2] तज्जन्यज्ञानप्रामाण्योत्पत्तिस्वतस्त्वसिद्ध्यधीनोत्पत्तिस्वतस्त्वमिति क्रमाज्ज्ञप्तावुत्पत्तौ च तदेवादौ समर्थयितुं "ज्ञानग्राहकमात्रग्राह्यत्वं स्वतस्त्व" मिति टीकाकृदुक्तं वाक्यं विवृण्वानो [3]ज्ञप्तौ स्वतस्त्वं तावन्निर्वक्ति—**याथार्थ्यरूपस्येति**। अर्थं—ज्ञेयम् अनतिक्रम्य वर्तमानं यथार्थं। "यथाऽसादृश्य" इत्यव्ययीभावः। य[4]थार्थभावो याथार्थ्यं; यथावस्थितज्ञेयविषयीकारित्वरूपं ज्ञेयाव्यभिचारित्वं तद्रूपस्येत्यर्थः। एतच्च परोक्षापरोक्षजन्याजन्यसर्वप्रमितिमात्रनिष्ठमित्युपेत्य ज्ञानप्रामाण्यस्येत्युक्तम्। अनुभूतित्वानधिगतार्थगन्तृत्वप्रमाकरणत्वसाधनाश्रययोरन्यतरत्वप्रमाव्याप्तत्वादेरव्याप्त्यसंभवादिदुष्टत्वादिति भावः। अस्यानुप्रमाणसाधारण्येपि साक्षाज्ज्ञेयविषयीकारित्वलाभायापि ज्ञानप्रामाण्यस्येत्युक्तम्। एतच्च भिन्नं भिन्नमेवेति सर्वप्रमितिनिष्ठप्रामाण्यस्वतस्त्वद्योतनाय तत्त-

---

[1] 'कत्व' इति न.—कुं. [2] तथाच.—कुं. [3] ज्ञप्तेरेव.—कुं. [4] यथार्थ.—मु.

दिति ज्ञानविशेषणम् । तस्यतस्य ज्ञानस्य यत्तत्तदर्थाव्यभिचारित्व-रूपं प्रामाण्यं तस्येत्यर्थः । प्रमापदप्रवृत्तिनिमित्तप्रामाण्यस्येति यावत् । "याथार्थ्यमेव मानत्वं" इति द्वितीयाद्यपादीयानुभाष्योक्तेः । निर्धारितं चैतद्याथार्थ्यं तत्रैव सुधायाम् । प्रपञ्चितं गुरुपादैरत्रैव प्रामाण्य-स्वतस्त्वानुमानवादे । "घटत्ववति घटत्वप्रकारकत्वादिरूपं पराभिमतमेवास्माकं याथार्थ्यं" इति वक्ष्यमाणदिशा स्वपरसाधारणमेवे-दमिति ज्ञेयम् । उपाधिखण्डनटीकाव्याख्यानमन्दारमञ्जर्यां "अथ केयं प्रमा" इत्यादिना प्रमात्वमाक्षिप्य

"यथार्थज्ञानमित्येव प्रमाया लक्षणस्थितिः ।
स्मृतेरपि च लक्ष्यत्वादतिव्याप्तिकथा मुधा"

इति प्रतिज्ञापूर्वकं "सादृश्यस्य यथाशब्दार्थत्वात् । सादृश्यं च ज्ञानार्थ-योस्सत्तया । न च भ्रमेऽतिव्याप्तिः । तत्र ज्ञानस्य सत्त्वादर्थस्य चासत्त्वात् [1]ज्ञानार्थयोः सत्तया सादृश्याभावात् । एवं च यथा—सादृश्यविशिष्ट एवार्थो यस्येति बहुव्रीह्याश्रयणे यथार्थशब्दस्य यथार्था प्रतीतिरित्याद्यभिधेयवल्लिङ्गं लोकसिद्धं सिद्धम् । 'यथाश-ब्दोऽनतिक्रमे वर्तते' इति टीकाकारवचनं तु फलितप्रदर्शनपरतया व्याख्येयम् । ज्ञानार्थयोः सादृश्यकथने[2] ज्ञानस्यार्थानतिक्रमस्यावश्य-कत्वात्" इत्यादिग्रन्थेन बहुव्रीह्युपादाने[3]नोक्तार्थस्य ग्रहणे तु न स्वपरसाधारण्यं प्रामाण्यस्य लभ्यते । परमते भ्रमविषयस्य सत्त्वेन लक्षणस्यातिव्याप्तेः । यद्वा तन्मतेऽपि प्राचां रीतौ वैशिष्ट्यस्य भ्रमेऽसत्त्वान्नवीनमते च पुरतोऽसत्त्वात्तदपि तन्मतसाधारणमेवेत्याहुः । अत्र यद्यप्याम्नायजन्यज्ञानप्रामाण्यस्वतस्त्वमात्रं प्रकृतम् । तथापि तत्स्व-

[1] तत्र.—मु. [2] न.—मु. [3] न समाहितम् । उ,—मु.

**ग्राह्यप्रामाण्यविरोध्युपस्थापकसामग्र्यसमवहितग्राह्यप्रामाण्याश्रयतत्तज्ज्ञानविषयकसाक्षिज्ञानाविषयत्वनैयत्यं स्वतस्त्वम् ।**

रूपग्राहिप्रत्यक्षज्ञानस्य तदनुग्राहकन्यायजानुमितिरूपज्ञानस्य तत्प्रामाण्यज्ञानस्य च प्रामाण्यनिश्चयोपायस्याप्यावश्यकत्वाज्ज्ञानप्रामाण्यमात्रस्यापि धर्मित्वेनोपादानम् । यद्वा प्राचीनतार्किकमत इव क्वचित्प्रामाण्यं स्वतः क्वचित्परत इति न भ्रमितव्यम् । किं तु सर्वत्रापि । नवीनमते सर्वत्र परतस्त्वोपगमेन तद्व्युदासायेति ध्येयम् । **ग्राह्येति**—ग्राह्यप्रामाण्यस्य यद्विरोधि प्रामाण्याभावाप्रामाण्यप्रामाण्याभावव्याप्याप्रामाण्यव्याप्यरूपं तस्य या उपस्थापकसामग्री दोषशङ्कादिरूपा तदसमवहितं ग्राह्यप्रामाण्याश्रयतत्तज्ज्ञानाविषयकं यत्साक्षिज्ञानं तेन गृह्यत एवेत्येवंरूपतद्विषयत्वनैयत्यमित्यर्थः । विप्रतिपत्तेरनावश्यकत्वस्य न्यायामृते व्युत्पादनान्नियत्यमस्ति न वेत्यनुक्त्वैकैव कोटिरुक्ता । अत्र प्रामाण्यविरहरूपत्वतद्व्याप्यत्वादिरूपाविरोधित्वस्य प्रामाण्याभावादिषु चतुर्ष्वेकस्याभावेपि यज्ज्ञाने सति प्रामाण्यनिश्चयः प्रतिबध्यते तज्ज्ञानविषयत्वरूपं ग्राह्यप्रामाण्यविरोधित्वं प्रामाण्याभावादौ ध्येयम् । वक्ष्यति च प्रामाण्यनिश्चयस्य प्रवर्तकत्ववादे "अभावानां प्रामाण्यानिश्चयविरोध्यभावत्वेन" इत्यादि । प्रामाण्यनिश्चयप्रतिबन्धकत्वं [1]तदनुकूलकिञ्चिद्धर्मविघटकत्वं वा तदनुत्पादव्याप्यत्वं वा । प्रामाण्यनिश्चयस्य साक्षिरूपतया नित्यज्ञानत्वेपि प्रामाण्यविषयकत्वादिकमुत्पत्तिमदेवेति तद्विशिष्टप्रामाण्यनिश्चयानुत्पादो न दुर्लभः । उपस्थापकेत्यत्र विरोध्युपस्थितितज्जनकसामग्रीभ्यामसमवहितेत्यर्थो ध्येयः ।

[1] च.—मु.

**तार्किकाभिमतानुव्यवसाय एवास्माकं साक्षी ।**

तथाच प्रामाण्यविरोध्युपस्थितिवेलायां तत्सामग्र्यभावेन तदसमवहितेनापि साक्षिणा [1]गृह्यत एवेति नैयत्यं नेति शङ्कानवकाशः। असमवहितत्वं च तदसामानाधिकरण्ये सति तदसमानकालिकत्वम् । "प्रत्यक्षं सप्तविधं साक्षिषडिन्द्रियभेदेन" इति प्रमाणलक्षणे, "स्वरूपेन्द्रियं साक्षीत्युच्यते" इति पद्धत्यादौ च साक्षिणोऽनुप्रमाणत्वोक्तेरिह पराभ्युपेतानुव्यवसायरूपत्वस्फोरणाय साक्षिज्ञानेत्युक्तम् ।

"साक्षिप्रत्यक्ष[2]तो ह्येव मानानां मानतेयते"

इत्यादौ ज्ञानेपि प्रयोगात् । तथा युक्तिपादे "न विलक्षणत्वात्" इति नये—

"सुखदुःखादिविषयं शुद्धं संसारगेष्वपि"

इत्यस्य व्याख्यावसरे सुधायां "स्वरूपभूतं चैतन्येन्द्रियं साक्षीत्युच्यते तदभिव्यक्तं ज्ञानं च" इत्युक्तत्वाच्च ॥ नन्वात्मस्वरूपज्ञानत्वादिरूपसाक्षित्वस्य परमतेऽप्रसिद्धिरित्यत आह—**तार्किकेति** । स्वतस्त्वानुमानवादे वक्ष्यमाणदिशा व्यवसायप्रकारप्रकारकतया व्यवसा[3]यप्रकारवद्विशेष्यकतया च तद्विषयक प्रत्यक्षत्वं वा ज्ञानांशे लौकिकप्रत्यक्षत्वं वाऽनुव्यवसायत्वम् । साक्षित्वमप्येवं रूपमेवात्र स्वतस्त्वनिरुक्तौ प्रविष्टमित्यर्थः । यन्मते वैशिष्ट्यमनुव्यवसायविषयोऽपि न स्वातन्त्र्येण विषय इति तन्मतेनाद्यः कल्पः । तत्र च विषयत्वनैयत्यं स्वातन्त्र्येणेति प्रवेशनीयम् । यन्मते वैशिष्ट्यमनुव्यवसायविषय एव नेति तन्मतेनान्त्यः । तत्र तु न स्वातन्त्र्येणेति विवक्षणीयम् । लौकिकत्वं च पराभिमतसामान्यादिप्रत्यासत्तित्रयाजन्यत्वम् । ज्ञानांश इति विशेषणात्स्मृत्युपनीतेऽतीते

[1] न.—कुं. [2] माण.—मु. [3] तत्.—मु.

**अत्र च नियमोक्त्या न्यायमतेपि क्वचिदनुव्यवसायेनप्रामाण्यग्रहस्य[1] वक्ष्यमाणत्वात्सिद्धसाधनमिति शङ्का साक्षीत्युक्त्या घटज्ञानमस्तीत्यादिशब्दजन्यमप्रतिबद्धं घटज्ञानविषयकं[2] ज्ञानं प्रति घट-**

---

घटज्ञाने तद्विषयकमहं घटज्ञानवानिति यज्ज्ञानमात्मांशे लौकिकप्रत्यक्षं तेन प्रामाण्याग्रहणा[3]द्बाधवारणमिति ध्येयम् । वस्तुतस्त्वत्रान्त्यपक्षप्रवेश एव साधुः । तथाच प्रामाण्यविरोधीत्यादिविशेषणवैयर्थ्यशङ्कावकाशलेशोपि नेति ज्ञेयम् । विशेषणकृत्यानि स्वयमेव व्यनक्ति—**अत्रेति** निरुक्तिवाक्य इत्यर्थः । नियमोक्त्या—गृह्यत एवेति नैयत्योक्त्येत्यर्थः ॥ **वक्ष्यमाणत्वादिति**—बाधोद्धारग्रन्थादौ घटादिज्ञानानुव्यवसायजन्यसंस्कारोत्पन्नस्मृत्युपनीते घटादिज्ञाने घटादिज्ञानजन्यसंस्कारोत्पन्नस्मृत्युपनीतं घटघटत्वतद्वैशिष्ट्यरूपप्रामाण्यं पञ्चमानुव्यवसायेन गृह्यत इति वक्ष्यमाणत्वादित्यर्थः । शङ्का निरस्तेत्यन्वयः । एतच्च तत्प्रकारप्रकारकतयेत्युक्तानुव्यवसायत्वरूपसाक्षित्वविवक्षया बोध्यम् । अन्त्यकल्पे तु गृहीतप्रामाण्यकज्ञानसजातीयज्ञानान्तरानुव्यवसायमीश्वरज्ञानं वादाय सिद्धसाधनता ध्येया । शब्दजन्यमित्युपलक्षणम् । सामान्यप्रत्यासत्तिजन्यं ज्ञानांशेऽलौकिकं ज्ञानवानहमिति ज्ञानं च प्रतीत्यपि ध्येयम् । साक्षित्वस्य द्विरूपस्यात्राभिमतत्वा[4]त्तत्प्रकारकेत्यादिरूपेण शब्दजन्यज्ञानस्य ज्ञानांशेऽलौकिकेत्यन्त्यपक्षरूपेण च सामान्यप्रत्यासत्तिजन्यस्य निरासात् ॥ **अप्रतिबद्धमिति**—विरोध्युपस्थितितत्सामग्र्यसमवहितमित्यर्थः । यस्तु घटज्ञानमिति ज्ञानेनापि प्रामाण्यं गृह्यत इति

---

[1]ग्रहणस्य.–मु. च. [2]विषयज्ञानं.–मु. च. [3]प्राप्तबाध.–अ. [4] त्तेन द्विरूपेणापि. शब्दजन्यज्ञानस्य सामान्यप्रत्यासत्तिजन्यादिज्ञानस्य च निरासात्.—आ. अ.

ज्ञानप्रामाण्यस्याविषयत्वाद्बाध इति शङ्का ग्राह्य-
प्रामाण्याश्रयतत्तज्ज्ञानविषयकेत्युक्त्या घटज्ञानं
गृह्णता साक्षिणा पटज्ञानप्रामाण्यस्याग्रहणाद्बाध
इति शङ्का अत्रशिष्टेन मन्मतेपि दोषशङ्कादिरूपे
ग्राह्यप्रामाण्यविरोधिग्राहकसामग्रीसमवधानात्मके
प्रतिबन्धे सति साक्षिणा प्रामाण्य[1]स्याग्रहणाद्बाध
इति शङ्का च निरस्ता । अत्र यद्यपि विषयत्वं
साक्षिज्ञानं प्रत्येवेति नियमो न युक्तः । मन्मतेऽपि
प्रामाण्यस्यानुमित्यापिग्राह्यत्वात्। तथापि साक्षिज्ञानं

पक्षधरोद्घाटितः पक्षः; स त्वपदार्थत्वादवाक्यार्थत्वादिति रुचिदत्ता-
दिनैव दूषितत्वादुपेक्ष्यः। अत्राविवक्षित तत्प्रकार प्रकारकतादिरूपज्ञान-
ज्ञानत्वा भावाच्च ॥ **तत्तज्ज्ञानेति**—ग्राह्यप्रामाण्याश्रयविषयकेत्युक्तावपि
घटज्ञानपटज्ञानयोर्द्वयोरपि ग्राह्यप्रामाण्याश्रयत्वेनान्यतरग्राहकेणान्यतर-
प्रामाण्याग्रहणेनोक्तदोषतादवस्थ्यात्तत्तज्ज्ञानविषयकेत्यप्यनुवादः । अत
एव धर्मिनिर्देशेऽपि तत्तदित्युक्तिः[2] । ग्राह्यप्रामाण्याश्रयेत्यनुक्तावप्रा-
माण्याश्रयस्यापि ज्ञानस्य तत्तज्ज्ञानपदेन ग्रहणप्रसङ्गात्तद्विषयकेण
साक्षिणा प्रामाण्याग्रहणाद्बाध एव। साक्षिण एकत्वेपि पटज्ञानप्रा·
माण्यग्रहणस्य पटज्ञानग्रहणप्रयुक्तत्वेन घटज्ञानग्रहणप्रयुक्तत्वाभावाद्बा-
धशङ्का युक्तैवेति भावः ॥ **दोषशङ्केति**—दुष्टकरणजन्यत्वशङ्का तन्नि-
श्चयतज्जन[3]कादिरूपेत्यर्थः । नैयत्यस्य साक्षिणैव गृह्यते साक्षिणा
गृह्यत एवेति च द्वेधा संभवाद्विवक्षितमाह—**अत्रेति** । निरुक्ता-
वित्यर्थः—**अनुमित्येति** । चैत्रज्ञानं प्रमा अर्थसंवादादित्यादिरूपेण

[1] ण्याग्रहणात्—मु. [2] क्तम्.—मु. [3] सामग्र्या.—मु.

**प्रति विषयत्वमेवेति नियमो युक्त एव। मणिकृतापि हि तदप्रामाण्याग्राहकेति विशिंषता प्रामाण्यग्रहणे[1]ऽप्रामाण्योपस्थापकसामग्र्यसमवधानस्य प्रयोजकतोक्तैव ॥ १ ॥**

**यद्वा–तत्तज्ज्ञानप्रामाण्यस्य ग्राह्यप्रामाण्याश्रयतत्तज्ज्ञानविषयकसाक्षिज्ञानविषयत्वयोग्यत्वं स्वतस्त्वं।**

---

मैत्रादेरनुमित्युदयादित्यर्थः। ननु ज्ञानग्राहकसाक्षिणो विरोधिसामग्र्यभावमपेक्ष्य प्रामाण्यग्राहकत्वे निरपेक्षज्ञानग्राहकग्राह्यत्वरूपस्वतस्त्वायोग इत्यत आह—**मणिकृतापीति**। परतस्त्ववादिनापीत्यर्थः। विरोध्युपस्थापकसामग्र्यसमवधानस्य प्रामाण्यग्रहणकारणत्वे हि दोषः। गमनशक्तस्य गजस्य गोक्षुरकापसा[2]रणस्येव प्रयोजकत्वे तु न दोष इति भावेनोक्तं—**प्रयोजकतेति** ॥ १ ॥ पूर्वं फलोपधानापेक्षया प्रयोजकविशेषणोक्त्या निरुक्तिः कृता अधुना तु तादृशविशेषणत्यागेन प्रका[3]रान्तरमाह—**यद्वेति**। सार्वत्रिकसार्वकालीनप्रामाण्यस्वतस्त्वलाभाय वाऽऽह—**यद्वेति**। नन्वेवं स्वतस्त्वस्याप्रतिबद्धसाक्षिवेद्यत्वरू[4]पत्वे "ज्ञानग्राहकः साक्षी प्रमाणतयैव गृह्णातीत्युत्सर्ग एव—विसंवादलक्षणात्परतोऽपवादादप्रामाण्यं च गृह्णाति" इति तत्वनिर्णयटीकाद्युक्तौत्सर्गिकत्वविरोध इत्यतस्तदनुरोधेन वा पक्षान्तरमाह—**यद्वेति**। अत्र योग्यत्वमित्युक्त्या यथोक्त[5]विशेषणेनापि साक्षिज्ञानेन प्रतिबन्धदशायां प्रामाण्याग्रहाद्बाध इति शङ्का; साक्षीत्युक्त्या घटज्ञानमस्तीत्यादिशब्दजन्यं घटज्ञानविषयकज्ञानं प्रति तथा ज्ञानांशालौकिकं सामान्यप्रत्यासत्ति-

---

[1] ग्रहे—**मु. च.** [2] सारक.—**आ.** [3] पक्षा.—**आ. मु.** [4] पक्षे.—**मु.**
[5] प्रतिबन्धस्थले यथोक्तविशेषणेनापि साक्षिणाप्रामाण्या ग्रहात्.—**मु.**

**योग्यत्वं च साक्षिनिष्ठां सहजां ग्रहणशक्तिं प्रति [1]स्वविषयज्ञानद्वाराऽवच्छेदकत्वम् । एवं च प्रति-**

जन्यं ज्ञानं च प्रति प्रामाण्यस्य कदाप्याविषयतया योग्यत्वं [2]नेति बाध इति शङ्का; ग्राह्यप्रामाण्याश्रयतत्तज्ज्ञानाविषयकेत्युक्त्या घट-ज्ञानं गृह्णता साक्षिणा पटज्ञानप्रामाण्यस्य कदाप्यग्रहेण योग्यत्वं [3]नेति बाध इति शङ्का च निरस्तेति पूर्ववद्युक्तमिति भावः। अत्रापि ज्ञानपदं पूर्ववत्स्वरूपेन्द्रियभ्रमानिरासाय। साक्षित्वमपि व्यवसाय-प्रकारप्रकारकतया तत्प्रकारवद्विशेष्यकतया तद्विषयकप्रत्यक्षत्वरूपं वा ज्ञानांशे लौकिकप्रत्यक्षत्वरूपं वाऽनुव्यवसायत्वमेवेति भाव । अत्रापि पूर्वत्रेव ग्राह्यप्रामाण्याश्रयेत्यंशकृत्यं बोध्यम्। नन्वत्र स्वाश्रयज्ञानग्रा हकग्राह्यत्वयोग्यत्वं स्वतस्त्वमित्युक्तं स्यात्; तच्चाप्रामाण्यस्याप्यस्ति। न च तत्र ज्ञानं साक्षिवेद्यमप्रामाण्यं त्वनुमेयमिति न दोष इति युक्तम्। प्रथममप्रामाण्यानुमित्यसंभववादे विसंवादाहितशक्तिकेन साक्षि-णैवाप्रामाण्यग्रहणस्य वक्ष्यमाणत्वादित्यतो वा; साक्षिविषयत्वयोग्यत्वं यदि साक्षिजन्यव्यवहारयोगि[4]त्वादिरूपं तदैतत्फलोपधानपर्यवसन्नमिति न प्रतिबन्धकालीनप्रामाण्यस्वतस्त्वलाभ इत्यतो वाऽऽह—**योग्यत्वं चेति सहजां**—स्वाभाविकीं विषयीकरणशक्तिं प्रति स्वस्य साक्षिणस्तच्छ-क्तेर्वा यो विषयो ग्राह्यप्रामाण्याश्रयरूपं ज्ञानं तद्वाराऽवच्छेदकत्वं—विषयतया व्यावर्तकत्वम्। ज्ञानग्रहणशक्तिरितिवत्प्रामाण्यग्रहणशक्तिरिति व्यवहारापादकत्वमेव प्रामाण्यस्य साक्षिविषयत्वयोग्यत्वमित्यर्थः। साक्षि-शक्तिर्ज्ञानद्वारैव तन्निष्ठप्रामाण्यं गृह्णाति । न साक्षात् । यथा प्रत्यक्षं व्यक्तिद्वारैव जातिं न साक्षादिति **स्वविषयज्ञानद्वारे**त्युक्तम्।

[1] प्रामाण्यस्य.—ख.　[2] च.—कुं.　[3] च.—कुं.　[4] ग्या.—कुं.

बन्ध[1]दशायामपि करतलादौ दाहयोग्यतावत् प्रामाण्ये ग्रहणयोग्यतास्त्येव । तथा च प्रामाण्यग्रहणशक्तेः सहजत्वात् प्रामाण्यग्रहणस्यौ त्सर्गिकत्वरूपस्वतस्त्वसिद्धिः । उक्तं च टीकाकारैः "साक्ष्येव ज्ञानं तत्प्रामाण्यं च विषयीकर्तुं क्षमः ।

ज्ञानग्राहकैकशक्तिविषयत्वं प्रामाण्यस्य साक्षिविषयत्वयोग्यत्वम् । नैतदप्रामाण्येऽस्ति । भिन्नशक्तिविषयत्वादित्यग्रे व्यक्तम् । गुरुपादास्तु—स्वपदेन प्रामाण्यम् । बहुव्रीहिसमासः । स्वविषयकं यज्ज्ञानं साक्ष्येव । साक्षिनिष्ठशक्तिं प्रति प्रामाण्यस्य न साक्षाद्विषयत्वमित्यतः स्वाविषयज्ञानद्वारेत्युक्तमित्याहुः । परमते शक्तेरप्रसिद्धावपीदं स्वमतासाधारणमिति वा परेणापि शक्तिमङ्गीकारयिष्यामीति वा ज्ञानग्रह[2]णसामग्रीमात्रं प्रति स्वविषयज्ञानद्वारावच्छेदकत्वमिति वा ज्ञानग्राहकतावच्छेदकधर्मावच्छिन्नग्राहकताकत्वं वा तदर्थ इति भावः । नन्वेतावतापि कथं प्रतिबन्धदशापन्न[3]ज्ञानप्रामाण्यस्य स्वतस्त्वलाभः येन सर्वप्रामाण्यानां स्वतस्त्वं स्यादित्यत आह—**एवं चेति** । योग्यतारूपे स्वतस्त्वे सतीत्यर्थः । योग्यत्वस्योक्तरूपत्वे सतीति वार्थः--**दाहेति** । दाहविषयत्वयोग्यतावदित्यर्थः । द्वितीयनिरुक्त्याऽन्यदप्यनुकू[4]लितमित्याह–**तथाचेति** । उक्तरूपयोग्यत्वगर्भनिरुक्तौ सत्यामित्यर्थः—**औत्सर्गिकत्वेति** । "ज्ञानग्राहकः साक्षी प्रमाणतयैव गृह्णातीत्युत्सर्ग एव" इति तत्वनिर्णयटीकाद्युक्तौत्सर्गिकत्वेत्यर्थः—**उक्तं चेति** । प्रामाण्यस्य सहजशक्तिविषयत्वं प्रति-

[1] बन्धक.—मु. च. छ.
[2] ग्राहक.—मु.
[3] पुस्तकेनास्ति.--मु.
[4] लं.--मु.

किं तु प्रतिबद्धो ज्ञानमात्रं गृहीत्वा [1]तत्प्रामा-ण्यग्रहणस्य नेष्टे" इति ॥ २ ॥ यद्वा—उभय-सिद्धप्रामाण्याविषयकज्ञानभिन्नज्ञानविषयत्वनैयत्यं स्वतस्त्वम्। तत्र प्रामाण्याविषयकज्ञानाभिन्नेत्युक्त्या

वन्धस्थले योग्यतास्तीत्येतच्चोक्तं तत्वनिर्णयटीकायामित्यर्थः । कारणा-न्तरोपनिपातेन मानसापराधेन प्रतिबद्ध–इत्येवंरूपेण तत्र पाठेऽप्य-यमेकदेशानुवाद इत्यदोषः ॥ २ ॥ प्रौढ्या स्वतस्त्ववादिमात्रसाधारणं पक्षान्तरमाह--यद्वेति । तत्तज्ज्ञानप्रामाण्यस्येत्यनुषङ्गः । साध्ये ग्राह्य-प्रामाण्याश्रयतत्तज्ज्ञानविषयकेति ग्राह्यम् । स्वतस्त्ववादिनो [2]ह्यनेके । ग्रन्थकर्तृकः । भट्टो गुरुर्मुरारिमिश्र इति च त्रयः । [3]माया-वाद्यादयो[3] वेदान्तिनश्च । तत्र भट्टो ज्ञानातीन्द्रियत्ववादी । गुरुर्ज्ञान-मात्रस्वप्रकाशत्ववादी । मिश्रस्तु न्यायमत इवास्वप्रकाशानुव्यव-सायवादी । तत्रोभयेत्यस्य सिद्धान्तितार्किकोभयेति भट्टतार्किकोभयेति गुरुतार्किकरूपोभयेति मिश्रतार्किकोभयेति मायिता[4]र्किकोभयेत्येवंरूपेणे-त्यर्थः । एकदाऽनेकैः सह विवादायोगात् । उभयसिद्धं यत्प्रामाण्याविष-यकं ज्ञानं प्रामाण्याविषयकत्वेनोभयसंमतं यज्ज्ञानं अयं घट इत्यादिरूपं ज्ञानं तद्भिन्नं ग्राह्येत्यादिरूपं च यज्ज्ञानं सिद्धान्ते प्रागुक्तरूपसाक्षिज्ञानं भट्टमते ज्ञानानुमितिरूपं गुरुमते स्वप्रकाशघटादिज्ञानं मिश्रमते तदनुव्यव-सायः । तेन गृह्यत एवेत्येवंरूपं तद्विषयत्वनैयत्यं तत्तन्मते स्वतस्त्वमि-त्यर्थः । न च गुरुमते सर्वज्ञानयाथार्थ्यस्वप्रकाशत्वयोरुपगमेन प्रामाण्या-विषयकं ज्ञानं नास्त्येवेति शङ्क्यम् । इदं ज्ञानमप्रमाणमित्याद्यप्रामाण्या-

[1] प्रामाण्य.–मु. छ. "तत्" इति नास्ति.–घ. [2] हि चत्वारः.–कुं.
[3] नास्ति.–कुं [4] नास्ति.–कुं.

घटोऽयमित्यादिघटादिविषयकप्रत्यक्षज्ञानं प्रति ज्ञानं गुण इत्यादिशब्देन घटज्ञानमित्यादिशब्देन च जन्यं[1] ज्ञानविषयकं ज्ञानं प्रति प्रतिबद्धानुव्यव-

रोपस्थले ज्ञानस्य प्रामाण्याविषयकत्वस्य गुरुतार्किकसंमतेः। आरोपस्तु गुरुमते इच्छास्थस्य व्यधिकरणप्रकारकत्वरूपाप्रामाण्यस्यासंसर्गाग्रहो न्यायमते विशिष्टज्ञानमित्यन्यदेतत्। अत्र ग्राह्यप्रामाण्याश्रयतत्तज्ज्ञानविषय-केत्युक्त्या तदंश एवोक्तरूपज्ञानभिन्नत्वस्याभिमतत्वाज्ज्ञानविषयकं ज्ञानं प्रमेति ज्ञानस्याद्यज्ञाने प्रामाण्याविषयकत्वेपि ग्राह्यप्रामाण्याश्रयज्ञाने प्रामा-ण्याविषयकभिन्नत्वसत्त्वान्न दोषः। प्रामाण्यपदं ग्राह्यतत्तत्प्रामाण्यपरं वा। तथाच यथान्यासेनैवोक्तस्थले न दोषः। अत्र नन्द्वयाप्रवेशेनोभय-सिद्धप्रामाण्याविषयकज्ञानविषयत्वनैयत्यामित्युक्ते तादृशानुमित्यादिना सिद्ध-साधनम्। अतोऽविषयकभिन्नेत्युक्तिः। अत्राद्यज्ञानपदं यथोक्तरूप-घटादिभिन्नेन घटज्ञानादिना प्रामाण्याग्रहाद्बाध इति शङ्कानिरासाय। अन्त्यं तु तादृशज्ञानभिन्नघटादिविषयत्वाभावेन बाध इति शङ्कानि-रासायेति व्यक्तमिति शिष्टपदकृत्यान्याह—**तत्रेति**। प्रामाण्याविषयक ज्ञानभिन्नेत्यनुक्त्वोभयसिद्धज्ञानविषयत्वनैयत्यमित्येतावत्युक्ते सति प्रष्टव्यं— उभयसिद्धज्ञानपदेन किं प्रत्यक्षज्ञानमभिमतं उत शाब्दं अथानु-व्यवसायरूपम्? द्वितीयेऽपि किं ज्ञानविषयकं विषयालिङ्गितज्ञानविष-यकं वेति विकल्पान्वा; विषयग्राहिज्ञानमिति वा ज्ञानग्राहिज्ञानमिति वा उभयग्राहि ज्ञानमिति वा उभयग्राह्यनुव्यवसायरूपप्रत्यक्षं वेति विक-ल्पान्वा हृदि निधाय क्रमेण निराह—**घटोयमित्यादिना**। प्रत्यक्षज्ञानं प्रतीत्यादेः प्रामाण्यस्याविषयत्वादित्यन्वयः। गुरुमते घटोयमिति ज्ञानेनापि

[1] जन्य.—मु. च.

जात्यं स्यात् ॥

किञ्च परासिद्धं[1] परिमाणत्वावान्तरमणुत्वादि-जातिभेदमङ्गीकृत्ये[2]दमुक्तम् ॥

वस्तुतस्तु यथा त्र्यणुकादिषु महत्वमे[3]कजातीयमेवोत्कर्षापकर्षवत्, यथा[4]चाणुत्वं परमाणुद्व्यणुकयोः एवं परिमाणमवान्तरजातिरहितमेव सर्वद्रव्येषूत्कर्षापकर्षवद्वर्तते । एकस्यैवोत्कर्षापकर्षौ च प्रतियोगिभेदेन सन्निकर्षविप्रकर्षाविवाविरुद्धौ । विस्तरस्तु सुधायां द्रष्टव्यः ॥

तस्मादीश्वरस्य[5] सार्वज्ञादेर्वेदनिरपेक्षानुमानेना-

---

दीर्घत्वं, ह्रस्वत्वं चेति। नीलत्वपीतत्वाद्यवान्तरजातिवत्परिमाणत्वावान्तरजातिचतुष्टयमुपेत्य परमाणावेवाणुपरिमाणं द्व्यणुके ह्रस्वपरिमाणं त्र्यणुकादौ महत्त्वादीत्यभ्युपगमेन द्व्यणुकेप्यणुत्वरूपपरिमाणत्वावान्तरजातिमत्परिमाणं त्र्यणुके च ह्रस्वत्वरूपपरिमाणत्वव्याप्यजातिमत्परिमाणं स्यादित्यापादने चेत्यर्थः । यद्वा उत्कर्षापकर्षादिरूपया गुणत्वव्याप्यपरिमाणत्वव्याप्यजात्येत्यर्थः ॥

स्वोत्प्रेक्षितपक्षैः सहोक्तानि पञ्चधा समाधानान्यपि[6] परिमाण[7]-प्रवादाननु[8]कूलानीति मन्वानः ''परमतमाश्रित्य परस्येदं दूषणाभिधानम्'' इति सुधोक्तं हृदिकृत्वाह—**किञ्च परासिद्धेत्यादि** । **सुधायामिति।**

---

[1] द्धप—ग-कुं. [2] त्यचे—मु. [3] एकपदं न—छ-ख-क-रा. [4] वा—च-छ-क-रा. अवयवाणुत्वं पर-ख. [5] रसा—कुं-ग. [6] न पारि—मु-अ. [7] णवादा-मु—अ. [8] दानुकू—मु-अ.

सिद्धेः कल्पनागौरवं सुस्थम् ॥

## [1]ईश्वरस्यानुमानिकत्वभङ्गः ॥ २२ ॥

[2]ईश्वरवादः समाप्तः ॥

---

ननु तथापि वर्णसमुदायरूपस्य [3] वेदस्य न नित्यत्वम्। शान्तः कोलाहलः श्रुतपूर्वो गकारो नास्तीत्यादिप्रत्यक्षेण, वर्णोऽनित्यः भावत्वे सति कृतकत्वादित्यनुमानेन च वर्णानामेवानित्यत्वा

---

वैशेषिकाधिकरणे समयपाद इत्यर्थः ॥

ईश्वरस्यानुमानिकत्वभङ्गः ॥ २२ ॥

ईश्वरवादः समाप्तः ॥

---

तथापीति। पैरुषेयवाक्येन धर्माद्यसिद्धावपि [4] पौरुषेयत्वे कल्पनागौरवदोषभावेपि वेद[5] पौरुषेयत्वे मानाभावेपीत्यर्थः। न नित्यत्वमिति। नानादिनित्यत्वमित्यर्थः॥

द्वितीयस्तवके कुसुमाञ्जलावुदयनोक्तमाह। शान्त इति। श्रुतेति। पूर्वं श्रुतः श्रुतपूर्व इत्यर्थः। शब्दोऽनित्य उत्पत्तिधर्मत्वादित्युदयनानुमानस्य परिष्कारपूर्वं मणावुक्तस्यायमनुवादो वर्ण इत्यादि।

---

1 इति इत्यधिकं-छ. 2 ईश्वरवादः समाप्तः इति-ख पुस्तकभिन्नेषु नास्ति. 3 वेदपदं न-रा. 4 प्यपौ-इ. 5 दापौ-इ-अ.

दिति चेदुच्यते। शान्तः कोलाहल इति धीर्ध्वनि[1]विषयैव। ध्वनिविशेषस्यैव कोलाहलत्वात्। श्रुतपूर्वो गकारो नास्तीति धीस्तु नास्त्येव। श्रुत[2] एव गकारः पुनःश्रूयते एक एव गकारोऽसकृदुच्चारित इत्यादिप्रत्यभिज्ञाविरोधात्। किन्तूच्चारणेनोपलब्ध[3]वर्णस्यानुपलब्धिमात्रेण श्रुतपूर्वो गकारो न श्रूयत इत्येव[4]धीः। उक्तं हि टीकाकारैः "प्रागुच्चारणा[5]दनुपलब्धा वर्णा उच्चारणे सत्युपल[6]भ्यन्ते इत्येवानुभवसिद्धम्। न तु तेषामुत्पत्तिर्विनाशो वा" इति॥

---

मणौ वर्णात्मकशब्द इत्युक्तावपि मणिकृन्मतेऽशतस्सिद्धसाधनस्यादोषत्वाद्वर्णपदानर्थक्यम्। वर्ण इत्येव वा पूर्तौ शब्दपदानर्थक्यम्। रूपादिनार्थान्तरवारकं तदिति तु छलत्वात्तथाशङ्कैव न युक्तेति वर्णोऽनित्य[7] इत्येवानुवादः कृतः।

वर्णानामनित्यत्वेपि न वेदनित्यत्वक्षतिः। तथाप्यभ्युपेत्य तत्समाधत्ते। **उच्यत इत्यादिना**। व्यक्तं चैतद्वादान्ते ग्रन्थ एव॥

**ध्वनिविशेषस्यैवेति**। यत्तु वर्धमाने[8] अनभिव्यक्तवर्णत्वव्याप्यजातिविशेषो वर्णसमूह एव कोलाहल इत्युक्तम्। तन्न। वर्णशून्यध्वनिविशेषेपि कोलाहलपदप्रयोगात्। **प्रत्यभिज्ञेति**। तद्भ्रान्तित्वं त्वग्रे निरसिष्यत इति भावः। **उक्तं हीति**। "न चोच्चारणकाल एव वर्णा[9]

---

[1] विशेष इत्यधिकं–मु. [2] पूर्व इत्यधिकं–ख. [3] स्य व–च-ग-ख-कुं.
[4] 'एव' इति नास्ति–क-ख-कुं. [5] णानु–कुं. [6] ब्धा–ख. [7] नित्य इति नास्ति–कुं.
[8] नाभि–मु. [9] नामु–अ-इ.

**अस्तु वा सा।[1]तथापि घटो नास्तीतिवन्न विशेष्यमात्रनिषेधिका। श्रुतपूर्वत्वविशिष्टनिषेधस्त्वलंकृतपूर्वश्चैत्रो नास्तीतिवत्पूर्वकालावच्छिन्नश्रवणध्वं[2]सरूपविशेषण[3]निषेधेनाप्युपपन्न[4]ः ॥**

**अस्तु वा सा विशेष्यमात्रनिषेधिका। तथापि-व्यञ्जक उच्चारणेऽव्यञ्जकत्वभ्रान्त्याऽलिङ्गेऽनुपलब्धिमात्रे योग्यानुपलब्धिरूपलिङ्गाभिमानाद्भ्रा-**

---

नुत्पत्तिरिति वाच्य"मिति तत्त्वनिर्णयवाक्यसम्बन्धिटीकायां वर्णजन्मवर्णाभावबुध्योरुच्चारणक्रियाविषयत्वमित्येतदुक्तमित्यर्थः ॥

अनुभवे विप्रतिपन्नं प्रत्याह—**अस्तु वा सेति**। श्रुतपूर्वो गकारो नास्तीति धीरित्यर्थः। **न विशेष्यमात्रेति**। घटस्य केवलत्वादस्य च सविशेषणत्वादिति भावः। **अलमिति**। पूर्वमलंकृतोऽलंकृतपूर्व इत्यर्थः। **विशेषणनिषेधेनेति**। "सविशेषणे हि विधिनिषेधौ विशेष्ये बाधे विशेषणमुपसंक्रामत" इति न्यायादिह च विशेष्यबाधस्य प्रागुक्तप्रत्यभिज्ञाविरोधेन व्यक्तत्वादिति भावः ॥

विशेष्यबाधे विवादिनं प्रत्याह। **अस्तु वा सेति**। धीरित्यर्थः। **तथापीति**। भ्रान्तिरूपेत्यादिनान्वयः। भ्रान्तिरूपत्वे बीजमाह। **व्यञ्जक इति**। वर्णो नास्ति अनुपलब्धेः स्तम्भादिवदिति लिङ्गाभासजन्यानुमितिरेव। न प्रत्यक्षरूपा। नापि प्रमितिरूपा। परमाण्वादावनुपलम्भे सत्यपि नास्तित्वाभावेन व्यभिचारितयानुपलब्धिमात्रस्यालिङ्गत्वेन तल्लिङ्गत्वस्याभिमानिकत्वात्। अलिङ्गे च लिङ्गत्वाभिमा-

---

1 'तथापि' इति नास्ति—छ. 2 ध्वंसपदं नास्ति—मु-च, ध्वंसेनाप्यु-रा.
3 ध्वंसेनाप्युप—छ-ख. 4 न्ना—कुं.

**न्तिरूपानुमितिरेव सा । न तु प्रत्यक्षा । प्रत्या-सत्त्यभावात् ॥**

**न चेन्द्रियविशेषणता प्रत्यासत्तिः । चक्षुषा**

---

नो योग्यानुपलब्धित्वभ्रममूलः । सोपि भ्रमः उच्चारणस्य न वर्णाभि-व्यञ्जकत्वम् । किन्तूत्पादकत्वमेवेति भ्रान्तिमूल एवेत्यर्थः ॥

एतेन श्रुतपूर्वो गकारो नास्तीति प्रतीतिर्निरनुमानादित्यसत् । शब्दस्यैव पक्षीकरणे हेतोरनाश्रयत्वम् । आकाशस्य पक्षत्वे तद्वृत्ति-यानुपलभ्यमानत्वहेतोर[1]नैकान्तिकत्वम् । शब्दसद्भावकालेपि तस्य सत्त्वात् । एवं कालपक्षेपि दोषात् । अहमिदानीं निःशब्दश्रोत्रवान् शब्दोपलब्धिरहितत्वात् बधिरवदिति चेन्न । दृष्टान्तस्य साध्यविकल-त्वात् व्याहतत्वाच्चेत्यादिखण्डनं निरस्तं ध्येयम् ॥

अतीतघटादौ ज्ञानविषयत्वाभावप्रतियोगित्वादिधर्मवदनुपलभ्य-मानधर्मस्यापि सम्भवेनासिद्ध्यादेरनापत्तेरिति । **न तु प्रत्यक्षेति** । तादृशबुद्धेः प्रत्यक्षत्वेपि शुक्तिरूप्यादिप्रत्यक्षवत्प्रत्यभिज्ञारूपप्रबलप्रत्यक्ष-बाधाद्भ्रान्तिरेवेति सुवचम् । तथाप्युदयनोक्तप्रत्यक्षत्वोपपादनखण्डनायैव-मुक्तिः ॥

अस्ति हि श्रोत्रशब्दाभावयोर्विशेषणविशेष्यभाव इत्यादिनोदयनो-क्तमाशङ्क्य निराह—**न चेन्द्रियेति** । श्रोत्ररूपेन्द्रिये शब्दाभावस्य सत्त्वेन तयोः सम्बन्धान्तरमन्तरेण तदुपश्लिष्टस्वभावत्वरूपविशेषणताप्र-त्यासत्तिरित्यर्थः । विशेषण[2]भावेनैव समवायाभावयोर्ग्रहणादिति भावः—**चक्षुषेति** । स्वसम्बन्धिविशेषणतयैवाभावादेरिन्द्रियेण ग्रहणम् । न तु

---

[1] नैका--अ-इ. [2] विशेष्य इत्यधिकं-मु.

स्वविशेषणीभूतस्य घटनिष्ठरूपप्रतियोगिकाभावस्य ग्रहप्रसङ्गात् । [1]त्वदभिमतस्य योग्येऽधिकरणेऽनुपलब्धिरूपस्येन्द्रियसहकारि[2]णोऽसत्त्वाच्च । त्वन्मते [3]चाधिकरणस्य गगनस्यायोग्यत्वात् ॥

न चाधिकरणस्यायोग्यत्वेपि प्रतियोगिनो योग्यत्वात्तत्सहकारिणी योग्यस्यानुपलब्धिरस्तीति वाच्यम् । पार्थिवपरमाणौ जलत्वाभावस्य प्रत्यक्षत्वप्रसङ्गात् ॥

---

स्वाविशेषणत्वेनैव । तथात्वे घटनिष्ठं यद्रूपं तत्प्रतियोगिकाभावस्य चक्षुष्यपि सत्त्वेन चक्षुषा विशेषणतारूपप्रत्यासत्त्या मम चक्षुषि घटरूपं नेति रूपाभावग्रहणप्रसङ्ग इत्यर्थः ॥

ननु प्रत्यासत्तेः फलबलकल्प्यत्वाद्रूपाभावादिना विशेषणतारूपप्रत्यासत्तिकल्पकं नेत्यतो दोषान्तरमाह—**योग्य इति** । यद्वा स्वसम्बन्धिविशेषणतयैवाभावादेरिन्द्रियेण ग्रहणम् । चक्षुषा च घटादिरूपाभावो रूपत्वादौ रूपं नेति गृह्यत एव । प्रकृते च श्रोत्रसंबन्ध्याकाशविशेषणतास्त्येव शब्दाभावस्येत्यतः किं योग्ये स्वसंबन्धिनि विशेषणतयाभाव ग्रहः उतायोग्ये ? आद्य आह—**योग्य इति** । **अनुपलब्धीति** । प्रत्यक्षयोग्यप्रतियोगिनोऽनुपलब्धीत्यर्थः । सिद्धान्ते साक्षिप्रत्यक्षत्वादाह—**त्वन्मत इति** । अन्त्योऽतिप्रसङ्गदुष्ट इति भावः । ननु नातिप्रसङ्गः । प्रतियोगिनो योग्यत्वस्यातिप्रसङ्गभञ्जकत्वादिति भावेनाशङ्क्य निराह । **न चेति** ॥

---

[1] त्वदभिमतस्येति नास्ति-**ग.** [2] रूपि इत्यधिकं-**ग.** [3] च इति नास्ति-**क-रा.**

**न च प्रतियोगितद्व्याप्येतरप्रतियोग्यु[1]पलम्भकसामग्रीरूपयोग्यताविशिष्टानुपलब्धिस्तत्सहकारिणी। एवं च जातिग्रहे व्यक्तियोग्यताया अपि कारणत्वात्परमाणोश्चा [2] योग्यत्वान्नोक्तदोषः ।**

---

यद्वा अनुपलब्धिर्हि प्रत्यक्षस्याभावग्रहे सहकारिणी। सा च नानुपलब्धिमात्रम्। अति प्रसङ्गात्। किन्तु योग्यानुपलब्धिः। सा च योग्येऽधिकरणेऽनुपलब्धिरूपा वा, योग्यस्य प्रतियोगिनोऽनुपलब्धिरूपा वा, योग्य[3]रूपानुपलब्धि[4]भूतानुपलब्धिरूपा वा? तत्रानुपलब्धेर्योग्यत्वं च किं प्रतियोगितद्व्याप्येतरेत्यादिरूपं वा, प्रतियोगिसत्त्वविरोधित्वरूपं वा, प्रतियोगिसत्त्वा[5]पादनेत्यादिरूपं वा? पक्षपञ्चकेऽपि न वर्णाभावस्य प्रत्यक्षतासिद्धिरिति भावेनाद्यं निराह। **योग्य इति।** द्वितीयमाशङ्क्य निराह। **न चेति॥**

उक्तदोषनिरासाय तृतीयं पक्षं [6] कुसुमाञ्जल्युक्तमाशङ्क्य[7]निराह। **न चेति।** प्रतियोगि[8]घटादि,[9]यच्च घटादिव्याप्यं सन्निकर्षादि, ताभ्यामित्तरा [10]घटादिलक्षणप्रतियोग्युपलम्भकसामग्री सैवानुपलब्धेर्योग्यता। तद्विशिष्टानुपलब्धिरभावप्रत्यक्षे सहकारिणीत्यर्थः। घटाभावप्रत्यक्षे तथादर्शनादिति भावः। प्रतियोगिसत्त्वेनुपलब्धेरेवाभावः। तद्व्याप्ये सत्यपि प्रतियोगिनः सत्त्वनियमेनानुपलब्धिर्नेति ताभ्यामितरत्वेनोपलम्भकसामग्री विशेषिता। **नोक्तदोष इति।** उपलम्भकसामग्रीरूपयोग्यताऽभावेन पार्थिवपरमाणौ जलत्वाद्यभावप्रत्यक्षतापत्तिदोषो नेत्यर्थः। [11]नन्वेवं

---

1 ग्युनुप-रा. 2 च इति नास्ति-छ. 3 भूत-मु-अ. 4 रूप-मु-अ. 5 संजन-मु. 6 'यद्वा' इत्यादि एतत्पर्यन्तो ग्रन्थः नास्ति-इ. 7 'आशङ्क्य' इति नास्ति-कुं. 8 गी-मु. 9 दिः-मु-अ. 10 रापाद्यघटादि-कुं. 11 नन्वित्यादि नास्ति-अ-इ-मु.

विशेषगुणग्रहे त्वाश्रययोग्यता न हेतुः। अन्यथा-गन्धादिग्रहो न स्यादिति। शब्दाभावग्रह [1]उक्तरू-पानुपलब्धिरस्तीत्युदयनोक्तं युक्तम्। एकस्य संयोगिनोऽपगमे सति संयोग[2]ध्वंसस्याप्रत्यक्षता-पातात्। तत्र प्रतियोगिभूतात्संयोगात्तद्व्याप्यात्स-न्निकर्षाच्चातिरिक्तस्य संयोगोपलम्भकस्यैकस्य सं-योगिनोऽभावात्। वर्णोपलम्भकस्योच्चारणस्याभा-वेनोपलम्भकसामग्र्या असत्त्वाच्च॥

एतेन प्रतियोगिसत्त्वाविरोध्यनुपलब्धिरूपा[3]

---

शब्दाभावोपि न प्रत्यक्षः स्यात् जातिग्रह इव विशेषगुणग्रहेप्याश्र-ययोग्यत्वस्य तन्त्रत्वा . . . . योग्यानुपलब्ध्यभावादित्यत आह। **विशेषगुणेति**। शब्दरूप[4]रसगन्धादिविशेषगुणेत्यर्थः। तथा च गगनलक्षणाधिकरणस्यायोग्यत्वेप्युक्तरूपयोग्यताविशिष्टशब्दानुपलब्धे-र्भावेन श्रोत्रेण गगने शब्दाभावग्रहो युक्त इति भावः। कुतोप्रत्यक्ष-त्वापात इत्यतः यावदुपलम्भकमेलनरूपसामग्र्यभावादिति भावेनाह। **तत्रेति**। एकसंयोगिनोपगमस्थल इत्यर्थः॥

ननु संयोगाभावान्याभावप्रत्यक्षे सहकारिणीयमनुपलब्धेर्योग्यते-त्यत आह। **वर्णेति**॥

सन्निकर्षग्रन्थान्ते मण्युक्तदिशा शब्दाद्यभावप्रत्यक्षत्वानुकूलं चतु-र्थपक्षभूतं योग्यत्वमनूद्य निराह। **एतेनेति**। प्रतियोगिसत्त्वविरो-धीति बहुव्रीहिः। यस्या अनुपलब्धेः प्रतियोगिसत्त्वं विरोधि सानु-पलब्धिर्योग्यानुपलब्धिः। भूतले घटाद्यनुपलब्धिस्तादृशी। परमाण्वाद्यनु-

---

[1] तु इत्यधिकं—क-ख-कुं-रा. [2] प्रध्वं—ख. [3] पयो—च. [4] रूपपदं न—कुं-अ.

योग्यानुपलब्धिस्तत्सहकारिणी, सा च शब्दाभावे संयोगध्वंसे चास्ति, शब्दादेः[1] सत्त्वेनुपलब्ध्ययोगात्, पार्थिवपरमाणुगते जलत्वाभावे तु नास्ति, व्यक्तेरयोग्यत्वेन जलत्वानुपलब्धिसम्भवादिति मण्युक्तं निरस्तम्। उक्तप्रत्यभिज्ञया शब्दस्य सत्त्वेपि व्यञ्जकाभावेनानुपलम्भसम्भवात् ॥

एतेनैव प्रतियोगिस[2]त्त्वासञ्जनप्रयु[3]क्तासञ्जनविषयभूतोपलब्धेरभावरूपा योग्यानुपलब्धिस्तत्सहकारिणी। अत एव [4]पक्षिलभाष्ये यदिस्यात्तर्ह्युपलभ्येतेति तर्कपुरस्कारमेवाभावज्ञानं व्युत्पादितम्। न चैवं घटे मनस्त्वात्यन्ताभावो वायौ

---

पलब्धिस्तु नैवम्। तत्सत्त्वेप्यनुपलब्धिसम्भवादिति भावः। **तत्सहकारिणीति**। अभावप्रत्यक्षसहकारिणीत्यर्थः। अस्मिन्पक्षे उदयनपक्षोक्तं [5]दोषद्वयं नेति व्यनक्ति। **सा चेति**। शब्दादेरित्यादिपदेन संयोगग्रहः। पूर्वोक्तदोषश्च नेत्याह। **पार्थिवेति**। **उक्तेति**। एक एव गकारोसकृदुच्चारित इति प्रागुक्तप्रत्यभिज्ञयेत्यर्थः ॥

प्रच्छमं पक्षमनूद्य निराह—**एतेनेति** । **प्रतियोगिसत्त्वासञ्जनेति**। आसञ्जनं देश विशेषे वर्तमानता। तत्प्रयुक्तासञ्जनविषयत्वं यस्या उपलब्धेः तादृशोपलब्ध्यभावो योग्यानुपलब्धिः। प्रतियोगिसत्त्वासञ्जनप्रसाञ्जितप्रतियोगिकत्वमनुपलब्धेर्योग्यत्वमित्यर्थ :---**तत्सहकारिणी**

---

1 दौ—छ. 2 त्वप्र इति शोधितमस्ति—छ-त्वाप्र—ख. 3 योज्या—छ.
4 प्राक्षि—ख. 5 क्तदो—मु.

रूपवदन्योन्याभावश्च प्रत्यक्षः स्यात् ; यदि घटे-
मनस्त्वं स्यात्तर्हि योग्यव्यक्तिवृत्तित्वात् घटत्वमि[1]-
वोपलभ्येत ; यदि महति वायौ रूपवत्तादात्म्यं
स्यात् तर्हि पृथिव्यामिवोपलभ्येतेत्या[2]सञ्जनसम्भ-
वादिति वाच्यम् । उक्तयोग्यानुपलब्धेःसत्त्वेनेष्टा-
पत्तेरिति निरस्तम् । उक्तरीत्या शब्दस्य सत्त्वेप्य-
नुपलम्भसम्भवेन शब्दसत्त्वासञ्जनेनोपलब्ध्यासञ्ज-
नासम्भवात् । कथं च विपर्यये पर्यवसानसहिते-
तर्के नियमेन सापेक्षस्याभावज्ञानस्याननुमिति-
त्वम् । तस्मात्पररीत्यापि न वर्णध्वंस ऐन्द्रियकः ।
पराभिमतस्य [3]सत्तयेन्द्रियसहकारिणोऽनुपलम्भ-
स्याभावात् ॥

---

अभावप्रत्यक्षसहकारिणी—**उक्तेति** । व्यञ्जकाभावेनेत्युक्तरीत्येत्यर्थः ।
अस्मिन्पक्षेऽनुमितित्वं स्फुटमित्याह—**कथमिति** । यदीह शब्दः
स्यादुपलभ्येत नोपलभ्यते अतो नास्ति शब्द इति विपर्यये
पर्यवसानसहिते । तर्क इति विषयसप्तमी । तादृशतर्कविषये
नियमेनापेक्षासहितस्येत्यर्थः । त्वन्मते तर्कस्या[4]नुमानानुग्राहकमात्रत्वे-
नानुमितेरेव तर्कसापेक्षत्वादिति भावः—**पराभिमतस्येति** । प्रति-
योगिसत्त्वप्रसञ्जितप्रतियोगिकत्वादिरूपयोग्यत्वस्येत्यर्थः । अनुपलम्भस्ये-
त्यन्वयः—**सत्तयेति** । स्वरूपसत्तया न तु ज्ञात[5]येत्यर्थः । तथात्वे-
ह्यनुमानरूपतया पृथग्ज्ञानत्वेनेन्द्रियसहकारित्वाभावादिति भावः ॥

---

[1] त्वेवो–ख. [2] सर्वत्र 'प्र' इत्यधिकमास्ति–ख. [3] सत्तयेति नास्ति–छ-रा.
[4] 'नियमेन' इत्यधिकं–मु. अ. [5] ततया–मु.

**मन्मते तु नेन्द्रियस्यानुपलब्धिः सहकारिणी। तथा हि। सहकारिण्या अनुपलब्धेः प्रत्यक्षाप्रत्यक्ष-साधारणोपलब्धिसामान्याभावरूपत्वे शङ्खे शङ्ख-त्वेन लिङ्गेन श्वैत्येऽनुमिते श्वेतो नेत्यभावभ्रमानु-दयप्रसङ्गः ॥**

**न चोक्तरूपानुपलब्धिरभावप्रमाहेतुरिति वा-च्यम् । गुञ्जापुञ्जे चक्षुपारोपितेन वह्नित्वेनोष्ण-स्पर्शानुमितौ सत्यां त्वचोष्णस्पर्शाभावभ्रमानुदय-प्रसङ्गात् ॥**

---

ननु भवन्मते घटाभावादिग्रहे चक्षुरादेर्यादृशोऽनुपलम्भः सह-कारी तादृश एव ममापि शब्दाभावग्रहेऽस्त्वित्यत आह—**मन्मते त्विति**। चक्षुरादिना घटादेरिव तदभावस्यापि साक्षात्संयोगसम्बन्धे-नैव ग्रहणोपपत्तौ किमनुपलब्धिसहकारेणेति भावेन सहकारिताखण्ड-नमारभते—**तथा हीति** ॥

अनुपलब्धिरिन्द्रियसहकारिणीति वदन्[1] प्रष्टव्यः अनुपलब्धि-पदेन प्रत्यक्षादिसाधारणप्रतियोगिज्ञानसामान्याभावो वा प्रत्यक्षादिसाधा-रणप्रतियोगिप्रमाभावो वा प्रतियोगिप्रत्यक्षाभावो वा अभावग्राहकेन्द्रिय-करणकप्रतियोगिप्रत्यक्षाभावो (वा) विवक्षितः। आद्येपि[2] फलीभूताभाव-ग्रहपदेनाभावज्ञानमात्रमुताभावप्रमेति। आद्य आह—**सहकारिण्या इति**। आद्यस्य द्वितीयमाशङ्क्य निराह—**न चेति**। वह्नित्वेनेत्यनन्तरं लिङ्गे-नेति शेषः ॥

---

1 'वादी' इत्यधिकम्–इ. 2 अपिपदं न–मु.

न च प्रमात्वविशेषितोक्तरूपोपलब्धिसामान्याभावोऽभावप्रमाहेतुरिति वाच्यम्। शुक्तौ रूप्यभ्रमे सत्यपि रूप्यप्रमाऽभावस्य सत्त्वेन रूप्याभावप्रमाप्रसङ्गात् ॥

न चोक्तरूपानुपलब्धिः प्रत्यक्षरूपोपलब्धिविशेषाभावरूपा, ततो नोक्तदोप इति वाच्यम्। तथापि मण्डूकवसाञ्जनदोपेण वंशमुरगत्वेन [1]चक्षुपा पश्यतस्त्वचोरग[2]त्वाभावाप्रमितिप्रसङ्गात् ॥

प्रत्यक्षशब्देनाभावग्राहकत्वेना[3]भिप्रेतेन्द्रिय[4]-कारणकज्ञानविवक्षायामपि कपाले घटो[5]स्तीति चाक्षुपसाक्षात्कारस्य विनश्यदवस्थाऽऽपन्ने घटे उत्पन्नत्वाद्धटध्वंसानन्तरं चक्षुषा घटध्वंससाक्षात्कारो न स्यात्। ध्वंससाक्षात्कारोत्पत्त्यपेक्षया पूर्वक्षणरूपे ध्वंसोत्पत्तिक्षण उक्तरूपस्य घटसाक्षात्कारस्य स्थित्या तदभावरूपहेत्वभावात् ॥

तस्माद्भावसाक्षात्कारेऽभावानुपलब्धिरिवाभावसाक्षात्कारेऽपि[6] न भावानुपलब्धिः सहकारिणी।

---

द्वितीयमाशङ्क्य निराह—न च प्रमात्वेति। तृतीयमनूद्य-निराह—न चोक्तरूपेति। अभावग्राहकेन्द्रियसहकारिरूपेत्यर्थः। अन्त्य-पक्षमनूद्य निराह—प्रत्यक्षेति। चाक्षुपसाक्षात्कारस्येति। विनश्य-दवस्थापन्नघटविषये[7]जातस्येति भावः ॥

---

[1] चक्षुपा इति नास्ति–ख. [2]गाभाव–च-छ. [3] भिमतें–च-ख-क. [4] करणक–ख-क-रा. [5]नास्तीति–छ-क. [6]'न' इत्यनन्तरमस्ति–च-मु. [7] द्वारस्येति–अ.

किं त्ववर्जनीयसान्निधिः । तदुक्तं पद्धतौ अनुपलब्धिस्त्ववर्जनीयसन्निधिरेवेति । अभावप्रत्यक्षतायां त्व[1]धिकरणयोग्यता तन्त्रम् । अन्यथा परमाणौ जलत्वाभावग्रहप्रसङ्गस्यापरिहार्य[2]त्वात् । इतरनिरूप्येषु ज्ञानेच्छादीर्घत्वपरत्वपृथक्त्वादिषु क्लृप्तत्वाच्च । अन्योन्याभावग्रहे त्वयाऽपि स्वीकृतत्वाच्च । न तु त्वदुक्तानेकविशेषणविशिष्टानुपलब्धिस्तन्त्रम् । अक्लृप्तत्वात् । विशेषणप्रयोजनस्यातिप्रसङ्गनिरासस्य दीर्घत्वादौ क्लृप्ताधिकरणयोग्यतयैव सिद्धेश्च ॥

नन्वभावप्रत्यक्षत्वप्रयोजकाधिकरणयोग्यता किमिन्द्रियग्राह्यत्वमात्रं किं वा प्रतियोगिग्राहकेन्द्रियग्राह्यत्वं यद्वाऽभावग्राहकेन्द्रियग्राह्यत्वम् ।

---

तर्ह्यभावप्रत्यक्षे किं तन्त्रमित्यतः "तत्प्रत्यक्षतायां धर्मिण एव प्रत्यक्षतोपयुज्यते" इति पृथगधिकरणीयसुधावाक्यं हृदिकृत्वाऽऽह ॥

**अभावेति** । **इतरेति** । ससम्बन्धिकपदार्थेष्वित्यर्थः—**अनेकेति** । प्रतियोगिसत्त्वासञ्जनप्रसञ्जितप्रतियोगि[3]कत्वादिरूपानेकविशेषणविशिष्टेत्यर्थः॥

नन्वनुपलब्धिमात्रस्य ग्राहकत्वे पार्थिवपरमाण्वादौ जलत्वाद्यभावः प्रत्यक्षः स्यादित्यतिप्रसङ्ग इत्यत आह—**विशेषणेति** । **दीर्घत्वेति** परिमाणविशेषः । आदिपदेन पृथक्त्वादिप्रागुक्तधर्मग्रहः ॥

अस्तूक्तरीत्याऽभावप्रत्यक्षत्वेऽधिकरणयोग्यत्वमेव तन्त्रं तावताऽपि शब्दाद्यभावप्रत्यक्षता सेत्स्यतीति भावेन शंकते—**नन्विति** ।

---

[1] यामधि–क-ख-कुं. [2] रात्–क-ख-ग-कुं. [3] गित्वा–कुं.

आद्येऽधिकरणं प्रतियोगिसमवायि चेदाश्रयनाश-जन्यो भूतलनिष्ठो घटध्वंसः प्रत्यक्षो न स्यात् । आश्रयमात्रं चेच्छब्दाधिकरणमपि योग्यमेव । वने सिंहनाद इत्यादिप्रतीत्या विशेषणतारूपप्रत्या-सत्त्याधिकरणस्य वनस्यापि प्रत्यक्षत्वात् । न द्वितीयः । स्तंभजीवनिष्ठयोः पिशाचेश्वरान्योन्या-भावयोरप्रत्यक्षत्वापातात् । न तृतीयः । वायुगुड-पाषाणेषु रूपतिक्तरससौरभाभावानामप्रत्यक्षत्वा-पातादिति चेन्न ॥

---

प्रत्यक्षो न स्यादिति। तत्राश्रय[1]भूतसमवायिनोनाशेनै[2]न्द्रियकत्वारोपाधि-करण[3]योग्यताऽभावात् । भूतलस्य चासमवायित्वादिति भावः—वनस्यापि प्रत्यक्षत्वादिति । तथा च तदभावस्यापि प्रत्यक्षत्वमेवेति भावः ॥

अप्रत्यक्षत्वेति । मणौ हि सन्निकर्षग्रन्थान्ते स्तम्भे पिशाच-तादात्म्या[4]भावः प्रत्यक्ष इति प्रतियोगिसत्त्वविरोध्यनुपलब्धिरूपयोग्या-नुपलब्धिरभावप्रत्यक्षनियामिकेति प्रत्यक्षेस्तम्भादौ पिशाचा[5]न्योन्याभाव-प्रत्यक्षत्वमुपपादितम् [6]तन्न स्यात् । तत्र भवदभिमत[7]प्रतियोगिग्राहके-न्द्रियग्राह्यत्वरूपाधिकरणयोग्यताया अभावात् । प्रतियोगिनस्तत्रातीन्द्रि-यत्वादिति भावः ॥

वायुगुडेत्यादि । तत्र यथाक्रमं रूपतिक्तरसगन्धाभावानां चक्षू-रसनघ्राणेन्द्रियग्राह्यत्वात् वाय्वादीनां च क्रमेण चक्षूरसनघ्रणा[8]विषय-त्वेन तत्राभावग्राहकेन्द्रियग्राह्यत्वाभावादिति भावः ॥

---

[1] यी–अ. [2] वेन्द्रि–अ. [3] णयो–कुं. [4] त्म्यभा–कुं [5] द्यन्यो–अ. [6] नत्तवापि संमतमित्यधिकम्–अ. [7] तस्यप्र–इ-अ. [8] द्यवि–मु.

यन्निष्ठत्वेनाभावो ज्ञायते तस्य प्रतियोगिसमवा[1]यिरूपस्य वान्य[2]रूपस्य वाऽधिकरणस्याभावग्राहकत्वेनाभिमतेन्द्रियग्राह्यत्वमधिकरणयोग्यतेति स्वीकारात् ॥

एवं च कपालनाशजन्यस्य भूतलनिष्ठस्य घटध्वंसस्य स्तम्भजीवनिष्ठयोः पिशाचेश्वरान्योन्याभावयोश्च प्रत्यक्षता। सिद्धा भूतलस्तम्भयोर्घटध्वंसपिशाचान्योन्याभावग्राहकचक्षुरादिग्राह्यत्वात्। जीवस्यापीश्वराद्भेदग्राहकसाक्षिग्राह्यत्वात् ॥

अत एवोक्तमनुव्याख्याने ॥

"शास्त्रगम्यपरेशानाद्भेदः स्वात्मन ईयते ।
अनुभूतिविरोधेन कथमेकत्वमुच्यते" ॥ इति ।

---

अधिकरणपदेनाभावप्रतीत्यधिकरणमात्रमित्युपेत्य अन्त्यपक्षाङ्गीकारेण समाधिमाह—**यन्निष्ठत्वेनेति** । पूर्वोक्तदोषं निराह—**एवं चेति** । तार्किकरीत्या मानसत्वभ्रमनिरासायाह—**जीवस्येति** । यद्वा जीवेश्वरभेदस्य द्वासुपर्णेत्याद्यागमग्राह्यतया कथमिन्द्रियग्राह्यत्वमित्यत आह—**जीवस्येति** । भेदान्योन्याभावयोरेकत्वाद्भेदेत्युक्तम्—**साक्षीति** । स्वरूपेन्द्रियग्राह्यत्वादित्यर्थः—**अत एवेति** । उक्त[3]रूपेन्द्रियग्राह्यत्वरूपाधिकरणयोग्यत्वस्याभावप्रत्यक्षे [4]तन्त्रत्वादेव । द्वितीयाध्यायतृतीयपादे "पृथगुपदेशात्" इत्यत्र शास्त्रैकगम्येश्वरभेदो जीवे साक्षिप्रत्यक्षसिद्ध इत्युक्तमित्यर्थः—**ईयत** । साक्षिणा ज्ञायत इत्यर्थः ॥

---

1 य–च–ख. 2 'अन्यरूपस्येति नास्ति'–छ. 3 स्वरू–अ. 4 क्षत्वतं–इ–अ.

वनादिकं च शब्दाभावग्राहकत्वेनाभिमतश्रोत्राग्राह्यमिति न शब्दाभावस्य श्रावणता ॥

यत्तु वाय्वादौ रूपाद्यभावानामप्रत्यक्षत्वापादनं, तन्न। [1] तन्मते नीरूपो वायुः, गुडो न तिक्तः इति वाय्वादिविशेष्यकप्रतीतीनामिव मन्मतेपि[2] वायौ न रूपं गुडे न तिक्ततेति वाय्वादिविशेषणकप्र[3]त्ययानामपि लैङ्गिकत्वेनेष्टापत्तेः। तत्र विशेष्ययोग्यतारूपप्रत्यक्ष[4]त्वहेत्वभावेनेव प्रकृतेपि दीर्घत्वादौ क्लृप्ताधिकरणयोग्यतारूपतद्धेत्वभावेन योग्यानुपलब्धिरूपलिङ्गाद्यनुसंधानकल्पनात्। न च भट्टमत इव मन्मतेऽनुपलब्धिरप्यनुमेया। येनानुपलब्धेरप्यनुपलब्ध्यन्तरानुमेयत्वेनानवस्था स्यात् ॥

न चैवं वाय्वादौ रूपाद्यभावस्यानुमेयत्वे चक्षु-

---

शब्दाधिकरणमपि योग्यमेवेति प्रागुक्तं निराह—[5]**वनादिक**मिति। प्रागुक्तं[6] दोषान्तरं च निराह—**यत्त्विति**। ननु वाय्वादिविशे-ष्य[7]कप्रतीतावधिकरणयोग्यत्वाभावाल्लैङ्गिकत्वं युक्तमित्यत आह—**तत्र विशेष्येति**। **प्रकृतेपीति**। वाय्वादिविशेषणकरूपाद्यभावप्रतीतावित्यर्थः। स्यादित्यनन्तरं किंतु साक्षिप्रत्यक्षेति योज्यम्। "अस्मत्पक्षेऽनुपलब्धेः स्वप्रकाशसाक्षिसिद्धत्वान्नानवस्थे"ति प्रमाणलक्षणटीकोक्तेरिति

---

[1] त्व-ग-छ-ख-क-रा. [2] अपिपदं-ख क-ग-रा. [3] तीतीनां-क. [4] क्षहे-ग-ख-क-रा. [5] वेदादिकमिति-ई वर्णादिकमिति-अ. [6] क्तदो-इ. [7] ष्यप्र-अ.

रादिव्यापारवैयर्थ्यम्, पक्षस्य वाय्वादेश्चक्षुराद्य-
योग्यत्वात्, लिङ्गीभूताया अनुपलब्धेश्च साक्षि-
वेद्यत्वात्, प्रतियोगिनश्च स्मरणादिति वाच्यम्।
लिङ्गीभूतानुपलब्धिविशेषणयोग्यतान्तर्गतालाको-
दिग्रहार्थत्वात् ॥

उक्तं हि प्रमाणलक्षणे "योग्यानुपलब्धेश्च
लिङ्गत्वम्" इति । लिङ्गत्वेनोक्ता [1]योग्यानुपल-
ब्धिश्च [2]न ग्राहकाभाव[3]प्रयुक्ता ॥

भावः । वैयर्थ्यमित्युक्तं व्यनक्ति—**पक्षस्येत्यादिना** । रूपादिलक्षण-
प्रतियोगिज्ञानार्थं च नेत्याह—**प्रतियोगिनश्चेति** । **अनुपलब्धिविशे-
षणेति** । अनुपलब्धिमात्रं नाभावग्राहकम् व्यभिचारात् । किंतु योग्या-
नुपलब्धिरेव । योग्यता च प्रतियोग्युपलम्भकसामग्र्यादिरूपेति भावः ।
**योग्येति** । टीकोक्तरीत्या योग्यस्यानुपलब्धिः [4]योग्यानुपलब्धिरिति
विग्रहः । संसर्गाभावग्रहे प्रतियोगियोग्यताऽपि तन्त्रमित्यग्रे व्यक्तत्वात् ॥

न चैव "मनुपलब्धिस्त्व[5]वर्जनीयसन्निधि" रिति प्रागुक्तपद्धति-
वाक्यविरोधः "अभावो[6]नुमा प्रत्यक्षं चे" तिप्रमाणलक्षणेऽभावद्वैविध्य-
स्याप्युक्त्या प्रत्यक्षेणाभावग्रहेऽनुपलब्धिरवर्जनीयसान्निधिः अन्यत्र लिङ्ग-
त्वेनेत्यविरोधात् ॥

नन्वनुपलब्धिलिङ्गतास्थलेऽनुपलब्धेरुपलम्भकसामग्र्यभावनिमित्त-
कतया तत्साहित्यरूपयोग्यताख्यविशेषणाभावाद्धेतोरसिद्धिरित्यत आह—
**लिङ्गत्वेनेति** ॥

[1] क्तानुप-ग-ख. [2] 'न' इति नास्ति-ग-छ-क-ख-रा. [3] वाप्र-ग-छ.
[4] ब्धिरिति विग्रहः-इ. [5] 'तु' इति नास्ति-इ. [6] वेऽनु-मु.

न चाधिकरणयोग्यतायास्तन्त्रत्वे आत्मादौ धर्माद्यभावोपि प्रत्यक्षः स्यादिति शङ्क्यम् । संसर्गाभावग्रहे त्वदभिमता प्रतियोगियोग्यताऽपि तन्त्रमिति मया स्वीकृतत्वात् । दृष्टानुसारिणी हि कल्पना ।

ध्वनिध्वंसोपि योग्यानुपलब्धिरूपलिङ्गगम्य एव । न तु प्रत्यक्षः । अत एव ॥

"क्वचिद्घटाद्यभावोपि प्रत्यक्षेणावगम्यते ।"

इति ब्रह्मतर्के, "अभावोऽनुमा प्रत्यक्षं च परामर्शापरामर्शविशेषादिति" प्रमाणलक्षणे, "प्रायेणानुमानेऽन्तर्भाव[1]ज्ञापनाय क्रमोल्लङ्घन"मिति प्रमाणलक्षणटीकायां च, प्रत्यक्षप्रतियोगिकाभावस्यापि

---

कुसुमाञ्जल्याद्युक्तमाशङ्कते—न चेति। तन्त्रत्व इति। अभावप्रत्यक्षत्व इति शेषः—प्रतियोगियोग्यताऽपीति। एतेन "अधिकरणयोग्यत्वं भेदग्रहे तन्त्र"मिति सुधोक्तिः "प्रतियोगियोग्यत्वं तन्त्र"मिति लक्षणटीकोक्तिश्चाविरुद्धोपपादिता ज्ञेया—अत एवेति। प्रागभावादिरूपसंसर्गाभावग्रहेऽधिकरणप्रतियोगिनोर्द्वयोरपि योग्यत्वस्यापेक्षितत्वादेवेति[2] बाहुल्येनानुमानान्तर्भावादेवेत्यर्थः । क्वचिदेव प्रत्यक्षत्वमुक्तमित्यन्वयः । तत्त्वनिर्णयोक्तब्रह्मतर्कवाक्ये इत्यर्थः—क्रमेति। अभावोऽनुमा प्रत्यक्षं चेति[3]मूलवाक्ये प्रत्यक्षमनुमा चेति वक्तव्ये अनुमाप्रत्य-

---

[1] सूचनाय–ग-कथनाय–क. [2] 'वा' इत्याधिकम्–मु. [3] इतः, 'क्रमव्यत्यासो' इत्येतत्पर्यन्तं नास्ति–इ.

क्वचिदेव प्रत्यक्षत्वमुक्तम् ॥

तस्माद्वर्णानित्यत्ववादिनस्तत्र रीत्याऽपि वर्ण-ध्वंसग्रहे सहकारि[1]णोऽभावात्प्रत्यासत्त्यभावाच्च तद-नित्यत्वे न प्रत्यक्षं मानम् ॥

**शब्दानित्य[2]त्वस्य प्रत्यक्षत्वभङ्गः ॥ २३ ॥**

---

ननु तर्हि योग्यानुपलब्धिरूपं लिङ्गं वर्णध्वं-सादौ मानम[3]स्त्विति चेन्न । व्यञ्जकाभावेनाप्यनु-पलम्भसंभवेन विशेषणासिद्धेः ॥

---

क्षंचेति क्रमव्यत्यासो बाहुल्येनानुमानान्तर्भावद्योतनायेति टीकार्थः[4]---**सहकार्यभावादिति** । योग्यानुपलब्धिरूपसहकार्यभावादित्यर्थः — **प्रत्यासत्तीति** । इन्द्रियविशेषणतादर्दूषितत्वादिति भावः । "न प्रत्यक्षम्" इति पदविभागः ॥

**वर्णानित्यत्वस्य[5]प्रत्यक्षत्वभङ्गः ॥ २३ ॥**

---

"व्यञ्जकभावाभावाभ्यामेवोपलम्भानुपलम्भा"विति तत्त्वनिर्णयटीकां हृदि कृत्वाऽऽह—**व्यञ्जकेति** । ध्वनिरूपव्यञ्जकेत्यर्थः—**विशेषणेति** । प्रतियोग्यनुपलम्भक[6]सहितानुपलब्धेरेव योग्यानुपलब्धित्वाद्व्यञ्जकाभावनिबन्धनानुपलब्ध्यभावनिश्चयेंऽधकारावृते घटवति गेहे घटाभावप्रमापातादिति भावः ॥

---

[1] र्यभा–ग. [2] त्वप्र–ग [3] स्ती–ख–रा. [4] ततः '**प्रत्यासत्तीति**' इत्येवास्ति–इ. [5] त्वप्र–मु. [6] म्भस–इ.

एतेन वर्णः[1] प्रयत्नोत्पाद्यः[2] तदनभिव्यङ्ग्यत्वे सति तदनन्तरमुपलभ्यमानत्वात् घटवत् इति निरस्तम्। विशेषणस्यापाततः सन्दिग्धासिद्धेः। विमर्शे वक्ष्यमाणरीत्या [3]निश्चितासिद्धेश्च॥

एतेनैव वर्णोऽनित्यः उत्पत्तिमत्त्वे सति भावत्वात्, सामान्यवत्त्वे सति अस्मदादिबहिरिन्द्रय[4]-ग्राह्यत्वात्[5] घटवत्, प्रत्यक्षविशेषगुणत्वात् घट-

---

मणिकृदाद्यभिमतहेतूनाशङ्क्य निराह—**एते[6]नेति**। प्रयत्नाभिव्यङ्ग्ये प्रयत्नानन्तरमुपलभ्यमाने व्यभिचारनिरासाय हेतौ तदित्यादि-सत्यन्तम्। गगनादौ तन्निरासाय विशेष्यम्—**आपातत इति**। नित्यत्वसाधकविशेषादर्शनदशायामित्यर्थः—**विमर्श इति**। उत्तरभङ्गे वक्ष्यमाणदिशा प्रत्यभिज्ञाविरोधादनित्यो न भवतीति विशेषदर्शने सतीत्यर्थः॥

**एतेनैवेति**। ध्वंसे व्यभिचारनिरासाय हेतौ भावत्वादिति विशेष्योक्तिः। गगनादौ तन्निरासाय सत्यन्तम्। द्वितीयहेताविन्द्रिय-प्रत्यक्षत्वादित्यस्येन्द्रियकरणकज्ञान[7]विषयत्वादित्यर्थः। क्वचिदिन्द्रियग्राह्य-त्वादित्येव पाठः। तत्र प्रत्यक्षत्वमात्रस्यात्मनि व्यभिचारात् बहिरि-न्द्रिये[8]त्युक्तिः। तथापि योगिबहिरिन्द्रियप्रत्यक्षत्वमादायोक्तदोषनि-रासाय—**अस्मदादीति**। घटत्वादौ तन्निरासाय सत्यन्तम्। तन्मात्र-स्यात्मन्यपि सत्त्वाद्विशेष्यम्। तृतीये च गुणत्वमात्रस्य गगनादिपरि-

---

[1] र्णाः—छ.　[2] द्याः—छ.　[3] संदिग्धा क.　[4] प्रत्यक्षत्वात्—ग.　[5] च इत्यधिकं—छ.　[6] नैवेति—अ.　[7] करणत्वात्—अ.　[8] ग्राह्येत्यधिकं—मु.

रूपवत्, उत्कर्षापकर्ष[1]वत्त्वात् मधुरादिरसवत् बहिरिन्द्रियव्यवस्थापकगुणत्वात् घट[2]रूपवदित्या-दि[3]मण्युक्ता[4]नुमानं तत्र मानम्। विपक्षे च शब्द-ध्वंसग्राहकप्रत्यक्षानुपपत्तिर्बाधिकेति निरस्तम्। विपक्षे बाधकस्यैव निरासात्॥

माणादौ, विशेषगुणत्वस्य जलपरमाण्वादिरूपादौ, प्रत्यक्ष[5]गुणत्वमात्रस्य चात्मैकत्वादौ, सत्त्वाद्व्यभिचारनिरासाय प्रत्यक्ष[6]गुणत्वादित्युक्तिः—**उत्कर्षेति**। उत्कर्षवत्त्वे सत्यपकर्षवत्त्वादित्यर्थः। एकैकस्य गगना[7]दिपरिमाणे परमाण्वादिपरिमाणे च सत्त्वादुभयोक्तिः। तारमन्द्रत्वादि-रूपोत्कर्षादिः पक्षे, दृष्टान्ते च माधुर्यातिशयादिः, तथापि जातिरूपो-त्कर्षादिरुभयत्र सम इति भावः—**बहिरिन्द्रियेति**। शब्दज्ञानं करण-साध्यम् कार्यत्वात् इति करणसामान्यसिद्धौ चक्षुरादेरूपादिज्ञानकरणत्वा-दिना शब्दज्ञानाहेतुत्वात्परिशेषाच्चक्षुरादिबाह्येन्द्रियचतुष्टयादन्यच्छ्रोत्रे-न्द्रियं सिद्ध्यतीति श्रोत्ररूपबहिरिन्द्रियव्यवस्थापकगुणत्वादित्यर्थः। गुण-त्वमात्रस्य गगनादिपरिमाणादिगुणे इन्द्रियव्यवस्थापकगुण[8]त्वस्यात्मग-तैकत्वादौ बहिरिन्द्रियव्यवस्थापक[9]त्वमात्रस्य रूप[10]त्वरसत्वेन व्यभिचार-निरासाय बहिरिन्द्रियव्यवस्थापकगुणत्वादित्युक्तम्। ननु चैतद्ध्वनाव[11]प्य-स्तीति चेत् किं तावता। यथोक्तसाध्यस्यापि तत्र सत्त्वात्—**तत्रेति**। वर्णानित्यत्व इत्यर्थः। एतेनेत्युक्तं व्यनक्ति—**विपक्ष इति**॥

[1] कत्वात्–ग [2] गत' इत्याधिकम्–छ-ख-क-रा. [3] मण्युक्तेति नास्ति–ग-ख. [4] क्तमनु–छ-ख-रा. [5] क्षादि–इ. [6] विशेषेत्यधिकं–इ. विशेष्येत्याधिकं–अ. [7] आदिपदं न–इ. [8] णस्य–अ. [9] कमा–अ. [10] त्वर-सत्वादौ सत्त्वेन–इ-अ. [11] न्यादाव–मु.

**आद्ये हेतावुत्पत्तिमत्त्वस्य द्वितीये प्राभाकरं प्रति सामान्यवत्त्वस्य नैयायिकं प्रत्यपि क्षणिके[1] शब्दे विषयजन्येन्द्रियकरणकज्ञानविषयत्वस्य तृतीयपञ्च- मयोर्मां प्रति गुणत्वस्य चतुर्थे उत्कर्षवत्त्वे सत्यप-**

---

प्रातिस्विकदोषं चाह—**आद्य इत्यादिना** । षष्ठ्यन्तानामसिद्धे- श्चेत्य[2]नेनान्वयः। उत्पन्नो गकार इति मण्युक्तप्रतीतिस्तु नास्त्येवेति भावः—**प्राभाकरं प्रतीति** । तस्यापि वर्णनित्यत्ववादित्वेन तं प्रत्यपि प्रयोज्यत्वात्। नित्यत्ववादे गकारादिव्यक्तेरेकत्वेन तत्र सामान्याभा- वात्। गुणत्वपक्षेपि तेन गुणगतजातेरनङ्गीकारादिति भावः। तं प्रति हेत्व[3]न्तरं भविष्यतीत्यत आह—**नैयायिकं प्रतीति** ॥

तन्मते कदम्बमुकलादिन्यायेन भेरीताडनो[4]च्चारणा[5]तिदेशा- च्छ्रोत्रदेशपर्यन्तं सजातीयशब्दपरंपरोत्पत्तेः । अन्त्योपान्त्यशब्दयोः सुन्दोपसुन्दन्यायेनान्योन्यनाशस्य च स्वीकारात्। सर्वशब्दानामि- वान्त्य[6]स्यापि त्रिक्षणव[7]त्त्वोपगमेनान्त्यशब्दस्थितिक्षणस्यैवोपान्त्य- शब्दस्य विना[8]शक्षणत्वादन्त्यस्य तृतीयक्षणे पूर्वशब्दस्य ध्वंसेनान्त्यस्य विनाशकाभावेन नित्यतापत्तेः । क्षणिकत्वे चोपान्त्यशब्दविनाशक्षण- स्यैवान्त्यशब्दविनाशक्षणत्वेन नित्यत्वापत्तिदोषाभावात्क्षणिकत्वं स्वीकृ- तम् । अतस्तस्मिन्ज्ञानात्पूर्ववृत्तित्वस्याभावेन ज्ञानजनकेन्द्रियसन्निकर्षा- योगात् विषयजन्यं इन्द्रियकरणकं यज्ज्ञानं [9]तद्विषयत्वस्यासिद्धेरित्यर्थः॥

**मांप्रतीति** । मन्मते वर्णस्य द्रव्यत्वादिति भावः—

---

[1] केन्त्यशब्दे–ग. कशब्दे–ख क्षणिकपदं न–क. [2] त्यन्वयः–इ. [3] त्व- नन्तरामितिशोधितम्–अ. [4] नादिदेशा–इ. [5] णादिदे–अ. [6] शब्दस्यापि–इ. [7] वर्तित्वेन–इ. [8] नश्यत्क्षण–अ. [9] तदिन्द्रियत्वस्या –अ.

**कर्षवत्त्वस्य मन्द्रतमे तारतमे चासिद्धेश्च । शब्द-त्वरसत्वादिना सांकर्यप्रसङ्गेन शब्दे रसे चैकस्या उत्कर्षादिरूपा[1]या जातेरभावेनासिद्धिसाधनवैक-ल्यान्यतरापाताच्च ॥**

**न चोत्कर्ष[2]स्य गुणत्वव्याप्यजात्या [3]सजातीय-साक्षात्कारप्रतिबन्धकतावच्छेदकत्वेन, अपकर्ष[4]स्य**

---

**शब्दत्वेति ।** तारत्वस्य शब्दत्वपरिहारेण रसे, शब्दत्वस्यापि तारत्व-परिहारेण मन्दशब्दे, तारशब्दे च तारत्वशब्दत्वयोरुभयोर[5]पि समावेशेन

"व्यक्तेरभेदस्तुल्यत्वं संकरोथानवस्थितिः ।
रूपहानिरसंबन्धो जातिबाधकसंग्रहः ॥"

इति कारिकोक्तसांकर्यरूपजातिबाधकेन तारत्वादेर्जातित्वायोगात् । [6]एवं रसत्वादिनापि सांकर्यं ध्येयम् ॥

नच तर्हि शब्दत्वस्यैव जातित्वं त्यज्यतामिति वाच्यम् । तस्या-नुगतप्रतीत्यादिना जातित्वस्य परमते सिद्धत्वादिति भावः ॥

**सजातीयेति ।** पक्षे शब्दान्तरं दृष्टान्ते रसान्तरं ध्येयम् । तार-शब्दश्रवणे शब्दान्तरस्यानुपलम्भात् । यद्यपि मणौ सजातीयेत्याद्ये-वोक्तम् । तथापि सुखादिसाक्षात्काराप्रतिबन्धकत्वात्तद्व्यावृत्तये तदीय-टीकोक्तस्यानुवादो—**गुणत्वव्याप्यजात्येति ।** प्रतिबन्धकत्वमात्रे तूक्ते फलोपधान[7]प्राप्तौ बुभुत्सावशान्मन्देपि शब्दे गृह्यमाणे तारशब्दस्या-प्रतिबन्धकतया तत्साधरणानुगतधीसिद्ध्यर्थं तदवच्छेदकत्वेनेत्युक्तम् ।

---

[1] पजा–छ. [2] त्वस्य–ख. [3] स्वजा–छ. सजातीयाप्रतिबध्यसाक्षात्कार-विषयतावच्छेदकत्वेन–ख. [4] त्वस्य–ख. [5] अपिपदं न–इ. [6] एवमित्यादि नास्ति–इ. [7] नाप्रा–इ.

चोक्तजात्या[1]सजातीयप्रतिबध्यसाक्षात्कारविषयता-
वच्छेदकत्वेनानुगम इति वाच्यम् । उक्तरूपस्यो-
त्कर्षस्यापकर्षस्य वा परिमाणेऽभावेनैकस्य[2] हेतु-
त्वेऽपि परममहत्परिमाणाणुपरिमाणयोर्व्यभिचारा-
भावेनोभयग्रहणवैयर्थ्यात् । उत्कर्षापकर्षयोः
प्रत्येकं[3]हेतुत्वे च य[4]थोक्तमन्द्रतमतारतमयो[5]-
र्भागासिद्ध्यपरिहारात् । [6]उक्तहेतुपञ्चकेपि श्रोत्रा-
वृत्तित्वस्योपाधित्वाच्च ।

---

तथा च तत्र बुभुत्सोत्तेजिकेति भावः—**उक्तेति** । गुणत्वव्याप्यजा त्येत्यर्थः । तारशब्दश्रवणे सत्यपकृष्टशब्दानुपलम्भादिति भावः ॥

किंचायं विशिष्ट ए[7]को हेतुरुत प्रत्येकं हेतुः? आद्ये गगनपरि-माणेऽणुपरिमाणे चाव्यभिचाराय हि विशेष्यं विशेषणं चेति वाच्यम्। न च तत्र व्यभिचारप्रसक्तिरस्ति। स्वस्य साक्षात्काराभावात्। सजा-तीयसाक्षात्कारप्रतिबन्धकत्वाभावाच्चेति भावेनाह—**उक्तरूपस्येति** । परिमाणे गगनादिपरिमाणे—**अभावेनेति**। तत्र साक्षात्काराप्रसक्तेरिति भावः ॥

अन्त्ये दोषमाह—**उत्कर्षेति**। **श्रोत्रावृत्तित्वस्येति**। तस्य घटादौ रूपरसादौ च साध्यव्यापकत्वात्साधनवति पक्षे शब्देऽभावेन साधनाव्यापकत्वात्। यदिन्द्रियं [8]यद्गुणं गृह्णाति तदिन्द्रियं तद्गुणयु-क्तमितिन्यायेन शब्दस्य श्रोत्रवृत्तित्वादिति भावः ॥

---

[1] स्वजा—छ. [2] कैकस्य—ग-छ-ख. [3] कहे—ग. [4] थाक्तमं—ग-ख. [5] भागपदं न—छ. [6] उक्तेत्यादिग्रन्थः नास्ति—ख-क-रा. [7] एवोको—इ. [8] यद्गुणं नास्ति—अ.

विपक्षाच्छ्रोत्रवृत्तिपरिमाणतो व्यावृत्तत्वान्न पक्षेतरता ॥

वर्णानित्यत्वेऽ[1]नुमानभङ्गः ॥ २४ ॥

---

किंच स एवायं गकार इति प्रत्यभिज्ञा[2]बाधः ।

---

न च श्रोत्रमशकसंयोगादौ साध्याव्यापकत्वम् । श्रोत्रेतरावृत्तित्वे सति श्रोत्र[3]वृत्तित्वा[4]भावस्याभिमतत्वात् । न च सिद्धान्तेऽथापि दोषः । परीत्या परस्य दोषोक्तेरिति भावः ॥

पक्षमात्रव्यावर्तकश्रोत्राख्यविशेषणवत्त्वात्पर्वतेतरत्वादेरिव नोपाधित्वमस्येत्याशङ्क्याह—**विपक्षादिति** । श्रोत्रस्याकाशात्मकत्वेन तत्परिमाणस्याजन्यत्वादिति भावः । एतच्चोपलक्षणम् । बाधादिस्थले पक्षेतरत्वस्याप्युपाधित्वस्वीकारात् । प्रकृते विपक्षे बाधकाभावस्येह प्रागव्यक्तत्वेन हेतूनामप्रयोजकत्वस्य वक्ष्यमाणदिशा बाधस्य च निर्णयेन पक्षेतरत्वस्याप्युपाधित्वे दोषो नेत्यपि ध्येयम् ॥

वर्णानित्यत्वे[5]नुमानभङ्गः ॥ २४ ॥

---

"तदेवेदं वचनमिति प्रत्यभिज्ञाविरोधात् । न च सादृश्यात्प्रत्यभिज्ञा भ्रान्तिरिति वाच्यम् । सोयं देवदत्त इत्यादेरपि तथात्वप्राप्तेः" इति तत्त्वनिर्णयतट्टीकयोरुक्तं व्यक्तीकुर्वन् उक्तहेतूनां बाधितविषयत्वं चाह—**किञ्चेति** । यद्यपि प्रत्यभिज्ञा न वर्णनित्यत्वं विषयीकरोति । तथापि पूर्वं गकारं श्रुतवतः पुनस्तच्छ्रवणे स एवायं गकार

---

[1] त्वानु—ग ख. [2] विरोधः—क-रा. [3] त्रा—इ. [4] त्वभा—इ. [5] त्वानु—अ-इ.

न च तानेव शालीनु[1]पभुञ्ज्महे इत्यादिवत्सोयं गकार इति व्यपदेशो गौण इति वाच्यम्। प्रत्यभिज्ञाबाध उक्ते व्यपदेशगौणत्वशङ्काया व्यधिकरणत्वात्। प्रत्यभिज्ञायाश्च[2]स्थायिपदार्थान्तर इवात्राप्यनुभवसिद्धत्वात्। ते शालय इमे शालयो

---

इति जायमाना प्रत्यभिज्ञा प्राक्तनस्येदानीन्तनेनैक्यं गोचरयन्ती तावत्कालस्थिरत्वमवगाहत इति—

तावत्कालं स्थिरं चैनं कः पश्चान्नाशयिष्यति।

इति न्यायेन पराभिमताशुतरविनाशस्य व्यतिरेकान्नित्यत्व एव पर्यवस्यतीति मण्युक्तदिशा वा टीकोक्तदिशा [3]पूर्वं पूर्वतरं पूर्वतममप्येवमित्यनादिनित्यतैव सिद्ध्यतीति भावेन प्रत्यभिज्ञाबाध इत्युक्तम्॥

अत्र चत्वारः पक्षाः सम्भवन्ति। ज्ञानमेवेदं नेति वा, ज्ञानत्वेप्यभिज्ञैव न प्रत्यभिज्ञेति वा, प्रत्यभिज्ञात्वेपि जात्य[4]भेदविषयेति वा, व्यक्त्यभेदविषयत्वेपि भ्रान्तिरिति वा। तत्राद्यं कुसुमाञ्जल्याद्युक्तमाशङ्क्य निराह—**नचेति**। शालीन् सूक्ष्मव्रीहिविशेषान्। ज्ञानमेवेदं नेत्युच्यत इत्यत आह—**प्रत्यभिज्ञाया इति**। **स्थायीति**। सोयं देवदत्त इत्यादाविव स एवायं गकार इति प्रत्यभिजानामीत्यनुभवसिद्धत्वादित्यर्थः। तत्राप्येवमनुभवोऽस्तीत्यतस्तत्र विपरीतदर्शनान्न प्रत्यभिज्ञानुभवस्य भावोस्ति। अस्ति चेदपि भ्रम एव। प्रकृते तु न तथेति भावेनाह—**ते शालय इति**॥

---

[1] न्भुञ्जत-**ग** न्भुञ्ज्महे-छ-क 'भुजाम' इति शोधितम्-छ न्भुञ्जानः-**ख**. [2] च इति नास्ति-**ग**. [3] पूर्वपूर्वतरमप्येव-**इ**. पूर्वं पूर्वतममप्ये-**अ**. [4] तिभे-**इ**.

न भवन्तीतिवत् स गकारोऽयं गकारो न भवतीति भेदप्रत्ययाभावाच्च ॥

न चेयं प्रत्यभिज्ञा पुरोवर्तिनि गकारे गत्वेनोपस्थितगकाराभेदविषया, सा च पुरोवृत्तिगकारस्य स्वाभेदेनाप्युपपन्ना, न तु [1]तत्काला[2]द्यवच्छेदेनोपस्थितगकाराभेदविषयेति वाच्यम् । प्रत्यभिज्ञान्तरवत् सोयमिति तत्तेदंताधिकरणाभेदप्रतीतेः ॥

नन्वियं गत्वादिजात्यभेदविषया । न च तथात्वे तज्जातीयोयमित्याकारः स्यादिति वाच्यम् । जात्यभेदादधिकस्य जातिगतस्य जातित्वस्य प्रतीतावेव तदाकारादिह च जातित्वस्याप्रतीतेरिति

---

द्वितीयं पक्षमाशङ्क्य निराह—न चेयमिति । प्रतभिज्ञेति । तव प्रत्यभिज्ञात्वेनाभिमतेत्यर्थः---उपपन्नेति । तथा चाभिज्ञैव जाता न तु प्रत्यभिज्ञेति भावः—तत्कालेति । अतीतकालेत्यर्थः ॥

तृतीयं पक्षमाशङ्कते—नन्विति । तथा सति तज्जातियोयमिति स्यादिति मणिग्रन्थोक्तं निराह—न च तथात्व इति । तज्जातियोयमित्यस्य तन्निष्ठजातिमानयमिति [3]ह्यर्थः । स चाकारो जातित्वभान एव युक्तो नान्यथेति भावः । सामान्यनित्यतायाः प्रमाणविरुद्धत्वा-

---

[1] 'तत्' इति नास्ति–छ-क-रा. [2] आदिपदं न–छ-क. [3] 'हि' इति नास्ति–इ-अ.

चेन्न। तारत्वादिना[1] सांकर्यस्य वक्ष्यमाणत्वेन गत्वादिजातेरेवाभावात्। स एवायं घट इत्यादेरपि तथात्वापातेन व्यक्त्यभेदस्य क्वाप्यसिद्ध्यापत्तेश्च। [2]क्वापि प्रत्यभिज्ञाया भ्रान्तित्वाभावापत्तेश्च। घटान्तराद्गृहीतभेदेपि घटे स एवायं घट इति प्रत्यभिज्ञाप्रसङ्गाच्च॥

किंच प्रत्यभिज्ञाजनके स एवायं गकार इति वाक्ये स इत्यस्य जातिपरत्वेऽयमित्यस्य च व्यक्तिपरत्वे जत्या सह व्यक्तेरेवाभेदः प्रती[3]येत न तु जात्या सह जातेः। तथा च निरसिष्यमाण-

---

दिति स्वमतावष्टम्भेन वास्तवमुपेत्य टीकायां परिहारोक्तावपि पररीतिमनुसृत्य स्वयं परिहारमाह—**तारत्वादिनेति। क्वापीति।** सोऽयं [4]देवदत्त इत्यादा[5]वपि जातिविषयत्वस्य वक्तुं शक्यत्वादिति भावः—**घटान्तरादिति।** तत्राप्यनुगतजातेः सत्त्वादिति भावः। जात्यभिप्रायेण तादृशप्रत्यभिज्ञापादनमिष्टमिति मन्वानं प्रत्याह—**किंचेति।** शाब्दप्रत्यभिज्ञायां या विषयव्यवस्था सैव प्रत्यक्षप्रत्यभिज्ञायामपि भविष्यति। तथा च [6]तत्र सोयमिति तदिदंशब्दाभ्यां किं जातिव्यक्त्योरुक्तिरथ जातेरेव उत व्यक्तेरेवेति वाच्यम्। पक्षान्तरासंभवात्। आद्येपि [7]व्यक्तेर्जात्यभेदोपि किं साक्षादथ परंपराय[8]वा। तत्राद्यं निराह—**प्रत्यभिज्ञाजनक इति।**

---

[1] संकरस्य–छ-ख-क-रा. [2] अद्यापि–क. [3] यते–छ-क. [4] दीप इत्या–अ. [5] देरपि–इ. [6] 'किं' इत्यधिकम्–अ-इ. [7] व्यक्तिजात्योरभे–मु. [8] 'वा' इति नास्ति–अ-इ.

भ्रान्तित्वपक्ष एवान्तर्भावः स्यात् ॥

नच जात्यभेदोपि व्यक्तौ परंपरासंबन्धेनास्तीति न भ्रान्ति[1]त्वमिति वाच्यम्। क्वापि व्यक्त्यभेदा[2]सिद्ध्यादि पूर्वोक्तदोषात् ॥

उभयोरपि जातिपरत्वे च व्यक्तिवाचकगकार[3]-सामानाधिकरण्य[4]मुक्तम्। उभयोरपि व्यक्तिपरत्वे तु शब्दजन्यप्रत्यभिज्ञा व्यक्त्यभेदविषयेति प्रत्यक्ष-प्रत्यभिज्ञापि तद्विषयैव। तयोः करणकृताभ्यां परोक्षत्वापरोक्षत्वाभ्यां भेदेपि विषयकृतभेदाननुभवात् ॥

न चेयं सोयं कुन्तलकलाप इत्यादिवद्भ्रान्तिः।

---

**भ्रान्तित्वपक्ष एवेति** । तथा च तन्निरासेनायं पक्षो निरस्तो भविष्यतीति भावः ॥

अन्त्यमाशङ्क्य निराह—**न चेति** ॥ जातेर्जात्यभेदः साक्षात् तत्समवायसंबन्धेन व्यक्ताविति परंपरयेति[5] भावः। द्वितीयं निराह—**उभयोरपि[6]जातीति**। तृतीयं निराह—**उभयोरपि[7]व्यक्तीति** ॥

नन्वस्तेवं प्रत्यभिज्ञा गकार[8]व्यक्त्यैक्यविषया । तथापि सा भ्रान्तिरस्तु । परि[9]लूनपुनर्जातकुन्तलकलापयोः सादृश्यान्निमित्तात्सोयं कुन्तलकलाप इति प्रत्यभिज्ञावदिति चतुर्थं पक्षमाशङ्कते—**न चेति**। तत्र परि[10]लूनकुन्तलसमूहस्य भूमौ पतितस्य दर्शनेन नायमसाविति

---

[1] न्तिरिति-ख-रा. [2] दसि-ग. [3] 'पद' इत्यधिकम्-ग. [4] मयुक्तं-ग-छ-रा. [5] त्यर्थः-अ-इ. [6] जातिपदं न-इ. [7] व्यक्तीति इत्येवास्ति-इ. [8] आदीत्यधिकम्-अ-इ. [9] धून-अ. [10] धून-अ.

बाधकाभावात् । न च भेदधीर्बाधिका । स गकारोयं गकारो न भवतीति विशे[1]ष्ये भेदबुद्धेरभावात् ॥

तारो गकारो मन्द्रो न भवतीति धीस्तु विशेष्याभेद[2]ज्ञानेन पाकरक्ते घटे न श्याम इतिवत्, मुण्डिते चैत्रे न शिखीतिवच्च विशिष्टभेदविषयैव । न विशेष्यभेदविषया ॥

इयांस्तु [3]भेदः; तद्विशिष्टं मम पदार्थान्तरम्, तव तु विशेषणोपरक्तं विशेष्यमेव वा विशेषण-

---

बाधकज्ञानोदयवदिह तदभावादित्याह—**बाधकेति** ॥

ननु [4]बाधकदर्शनाद्बाधकाभावादित्यसिद्धमिति चेत्तर्कि भेदज्ञानमुतोत्पत्तिविनाशज्ञानमथ विरुद्धधर्मवत्त्वज्ञानम्, यद्वा गत्वादिव्याप्यजातिविशेषानुभवरूपज्ञानं बाधकम् । आद्यमाशङ्क्य प्रत्याह—**न चेति** । [5]न बाधकेत्यतः सा किं विशेष्यभेदविषयाथ तारत्वादिविशिष्टभेदविषयेति[6] विल्प्याद्यं [7]निराह—**स इति** । द्वितीयेत्विष्टापत्तिरिति भावेनाह—**तार इति** । विशिष्टभेदधीर्बाधान्न विशेष्यभेदविषयिणीति भावेनोक्तम्—**विशेष्याभेदज्ञानेनेति** । हेतुनेति शेषः ॥

ननु, विशिष्टं न विशेष्यादितोऽतिरिक्तमिति मते अस्तु विशेष्यभेदविषयेत्यत आह—**इयांस्तु भेद इति** । उपरक्त विशेष्यमेव न तु

---

[1] शिष्य–च-शेष्य-क. [2] मानेन-'मात्रेण' इति शोधितम्-'विशेष्याभेदमानेन' इत्येतदुपरिरेखाभिः पराहतम्–छ. ष्यभेदमानेन–रा-ग-क. [3] विशेषः–ञ. [4] बाधकाभावादित्येवास्ति–अ-इ. [5] 'कुतः' इत्यधिकम्–अ-'नबाधकेत्यत'-इति नास्ति–इ. [6] इति 'विकल्प्य' इति नास्ति–इ-अ. [7] पराह–अ-इ.

विशेष्यसंबन्ध एव वेति। उभयथापि न विशेष्याभेदहानिः ॥

नापि तारो नष्टो मन्द्र उत्पन्न इत्युत्पत्त्यादिधीर्बाधिका। पाकरक्ते श्यामो नष्ट इत्यादिवन्मन्मते विशिष्टनाशविषयत्वेन त्वन्मते तु विशेषणनाशविषयत्वेन मतद्वयेपि विशेष्यनाशाविषयत्वात् ॥

[1]नापि तारत्वादिविरुद्धधर्मसंसर्गधीर्बाधिका। यो गकारो [2]मन्द्रः स एव तार इति सामानाधिकरण्यानुभवेनैकस्मिन्नेव चैत्रे शिखित्वमुण्डित्ववद्घटे श्यामत्वरक्तत्ववत्, गगने शब्दतदभाववत्, आत्मन्यदृष्टतदभाववच्च काला[3]दिभेदेनाविरोधात् ॥

न चैकदैव चैत्रमैत्रोच्चारितयोर्गकारयोस्तारत्वमन्द्रत्वे दृश्येते इति वाच्यम्। एकदैव गगने विहगदेहसंयोगतदभाववत्, आत्मनि सुखदुःखा[4]दिवच्च प्रदेशभेदेनाविरोधात्। स च प्रदेशभेदो मम स्वाभाविकः तव त्वौपाधिक इत्यन्यदेवैतत् ॥

---

केवलमित्यर्थः। तथा च त्वन्मते स्वर्गी ध्वस्त इत्यादाविवेहापि विशेषणभेदविषयैव स्यादिति भावः। द्वितीयं बाधकं निराह—**नापि तार इति।**

तृतीयं निराह—**नापि तारत्वेति**। स किं तारत्वादिरौपाधिको धर्मः? उत जातिरूपः? आद्य आह—**यो गकार।** **इति कालादिभेदेनेति।** "एकस्यैव वर्णस्य काल[5]भेदेनोच्चारयितृपुरुषभेदेन

---

[1] न च मु-च-छ-क-रा. [2] सर्वत्र 'न्द' इत्येवास्ति-छ-क-ग-ख

[3] आदिपदं नास्ति-छ-क-ग-ख. [4] आदिपदं न-छ-ग-ख. [5] आदीत्यधिकम्-अ.

न च तारत्वादीनां जातित्वान्न कालादिभेदे-
नाविरोध इति वाच्यम्। त्वन्मते गत्वादिना
संकरात्सावधिकत्वाच्च। न हि जातिः सावधिका।
तारेप्यन्यापेक्षया मन्द्रत्वस्य मन्द्रेप्यन्यापेक्षया
तारत्वस्य सत्त्वेन तुल्यव्यक्तिकत्वाच्च। तारतमत्वा-
देरपि पाचकतमत्वादिवदतिशयविशिष्टौपाधिकध-
र्मत्वात् ॥

न च गत्वादिव्याप्यतारत्वादीनां नानात्वाद-
संकरः। सर्वत्राप्येवं संकरस्य सुपरिहरत्वेन तस्या-

---

नासिकादिस्थानभेदेन विरुद्धधर्माध्या[1]सोपपत्तेरिति" तत्त्वनिर्णयटीको-
क्तेरिति भावः ॥

द्वितीयमाशङ्क्य निराह---न च तारत्वा[2]दीनामिति। गत्व-
परिहारेण तारत्वस्य वर्णान्तरे तारत्वपरिहारेण गत्वस्य मन्दगकारे,
तारगकारे च गत्वतारत्वे [3]द्वे अपि स्त इति न जातित्वं तारत्वस्य।
एवं मन्दत्वादेरपीति भावः—सावधिकत्वाच्चेति। तारत्वस्य मन्दा-
पेक्षत्वान्मन्दत्वस्य तारापेक्षत्वादिति भावः --तुल्येति। यावन्तस्तार-
गकारास्तावन्तो मन्दाश्च भवन्तीति गत्वतारत्वमन्दत्वानां घटत्वकरित्व-
कलशत्वानामिव न जातित्वम्। किं तु गत्वादिरेव जातिः। न तु तार-
त्वादिरिति भावः॥

ननु तारत्वादेरजातित्वे तारतमत्वादेरपि तथात्वं स्यादित्यतः स्या-
देवेत्याह—तारेति। [4]अतुल्यव्यक्तिकत्वात्तारतमत्वं जातिः स्यादित्यतो

---

[1] सापत्ते-मु. [2] आदिरदं नास्ति-इ-अ. [3] 'द्वे' इति नास्ति-इ
[4] इयमवतारिका नास्ति-इ.

दोषत्वापातात् ॥

अत एव स्वर्णत्वादिव्याप्यघटत्वादिकमपि नाना । घटत्वस्यावयवसंयोगविशेषरूपसंस्थानविशेषसमानाधिकरणद्रव्यत्वरूपौपाधिकधर्मत्वादिसंभवात् । तारत्वादेर्नानात्वे ताराकारानुगतप्रत्ययानुपपत्तेश्च ॥

न च भिन्नानामपि जातीनां तारशब्दप्रवृत्तिनिमित्तत्वेनानुगमादेकाकारप्रत्ययः । अगृहीतसमयस्य बालस्यापि ताराकारानुगतप्रत्ययात् ॥

न च सजातीयसाक्षात्कारप्रतिबन्धकतावच्छेदक[1]जातित्वेनानुगमः । आवश्यकेनोक्तप्रतिबन्ध-

---

वाह--- तारेति । तस्येति । संकरस्य जातिबाधकत्वानापत्तेरित्यर्थः ॥

नन्वेवं नानात्वेन सांकर्यस्यापरिहार्यत्वे स्वर्णघटे घटत्वं जातिर्न स्यात् । नानात्वेनैव तत्र जातिसांकर्यस्य परिहार्यत्वादित्यत आह--- अत एवेति । तत्र घटत्वं जातिरेव नेत्याह---घटत्वस्येति । ताराकारेति । अयं तारोऽयं तारोऽयं तारोऽयमपि तार इत्येवं ताराकारेत्यर्थः---अगृहीतेति । तारशब्दनिमित्तत्वमजानतोप्ययं तार इत्यनुगताकारप्रत्यय[2]दर्शनादित्यर्थः ॥

सजातीयेति । गुणत्वव्याप्यजात्या सजातीयेत्यर्थः । पूर्ववत्पदकृत्यं बोध्यम् । उक्तेति । सजातीयसाक्षात्कारप्रतिबन्धकत्वे-

---

[1] जातिपदं नास्ति-ख.  [2] याद-मु.

कत्वेनैव शब्दप्रवृत्तिव्यवहारयोरुपपत्तौ जाति-कल्पनावैयर्थ्यात् ॥

न च यदा मन्द्रे बुभुत्सा तदा मन्द्रग्रहरूप-कार्यदर्शनेन प्रतिबन्धक[1]त्वाभावात्तारव्यवहारो न स्यात्। प्रतिबन्धकतावच्छेदकविवक्षायान्तु जाति-सिद्धिः, जातितोऽन्यस्यावच्छेदकस्याभावादिति वाच्यम्। त्वन्मतेपि प्रतिबन्धकतावच्छेदकावच्छिन्ने सति मन्द्रग्रहरूपकार्यायोगात् ॥

यदि च बुभुत्सोत्तेजिका तर्हि मन्मतेप्युत्तेज-कस्य सत्त्वेन कार्यसम्भवेपि प्रतिबन्धकस्य सत्त्वात्तारव्यवहारो[2] युक्तः। तस्मात्प्रत्यभिज्ञाया-स्तारत्वादिविरुद्धधर्मसंसर्गो न बाधकः ॥

---

नेत्यर्थः। शब्देति। तारशब्देत्यर्थः ॥

उक्तविवक्षायां बाधकमाशङ्क्य निराह। **न चेति**। तार-शब्दश्रवणदशायामेव बुभुत्सावशान्मन्दशब्दग्रहेण गुणत्वव्याप्यजात्या सजातीयशब्दग्रहाप्रतिबन्धाच्छ्रूयमाणे तारशब्दे तारशब्दव्यवहारो न स्यादित्यर्थः ॥

**मन्मतेपीति**। तारत्वं न जातिः। तेषामनेकत्वेपि सजातीय-साक्षात्कारप्रतिबन्धकत्वेनानुगम इति वादिमतेऽपि बुभुत्सारूपोत्तेजकव-शेन मन्दग्रहसम्भवेपि तारव्यवहारः स्यादेव। न ह्युत्तेजकं[3] तत्प्रति-बन्धाभावो मण्यादेः प्रतिबन्धकत्वमेव नेत्यस्य कल्पको भवति। तथा-त्वेऽतिप्रसङ्गादिति भावः। व्यवहितत्वात्तृतीयपक्षदोषमुक्तमुपसंहरति। **तस्मादिति**। तारत्वादेरविरोधादिति भावः ॥

---

[1] काभा—ग-ख. [2] रोऽयुक्तः—छ. [3] कक्तप्रतिबन्धाभावो—इ.

नापि शुकशारिकामनुष्यतद्विशेषरूपवक्तृविशेषानुमापकगत्वादिव्याप्यजातिविशेषानुभवो बाधकः। वर्णाश्रवणेपि तत्तद्ध्वनिविशेषेणैव तत्तदनुमानदर्शनेन वर्णश्रवणेप्यावश्यकेन ध्वनिविशेषेणैव तदनुमानात्। अन्यथा यो गकारः शुकेनोच्चारितः स एव मनुष्येणापीत्यादिप्रत्यभिज्ञा न स्यात्। अत एवानुव्यवसायो 'ध्वनिविशेषेणैव दूरस्थः पुत्रो [1]मयानुमित' इति ॥

न चैवं सति सैवेयं [2]घर्घरी स एवायं ध्वनिरित्यादिप्रत्यभिज्ञया ध्वनिरपि नित्यः स्यादिति मण्युक्तं [3]युक्तम्। ध्वनिवर्णयोर्द्वयोरपि नित्यत्वे द्वयोरपि सदोपलब्धिप्रसङ्गात्। उच्चारणवैयर्थ्याच्च ॥

---

चतुर्थं पक्षं निराह—**नापि शुकेति**। **बाधक इति**। स एवायं गकार इति प्रत्यभिज्ञाया इत्यर्थः। गकारव्यक्तेरेकत्वे गत्वस्याजातित्वेन तद्व्याप्यजातेरयोगादिति भावः। गकारादिव्यञ्जकध्वनिविशेषणैव वक्तृविशेषानुमानम्। न तु त्वदुक्तजातिविशेषेण। येन प्रत्यभिज्ञा भ्रान्तिर्भवेदित्याह—**वर्णाश्रवण इति** ॥

**एवं सतीति**। स एवायं गकार इत्यादिप्रत्यभिज्ञाया अभ्रान्तित्व इत्यर्थः। **मण्युक्तमिति**। शब्दानित्यत्ववादे सिद्धान्ते मण्युक्तमित्यर्थः। प्रत्यभिज्ञाद्वयस्याभ्रान्तित्वायोगादन्यतरभ्रान्तित्वेऽवश्यंभाविनि ध्वन्यंश एव तद्युक्तमिति सयुक्तिमाह— **ध्वनिवर्णयोरिति** ॥

---

[1] मयेति नास्ति–क·ग·ख. [2] गूर्जरी–छ. गुर्जरी–क·ग·ख. [3] निरस्तम्–छ.

**न चोच्चारणस्य व्यञ्जकत्वान्नोक्तदोष इति वाच्यम् । भिन्नदेशत्वात् । उच्चारणं हि वक्तृवक्रे । शब्दस्तु श्रोतृश्रोत्रे । भिन्नेन्द्रियग्राह्यत्वाच्च । अत एव नोच्चारणजन्यो वायुर्व्यञ्जकः । अत एवातीन्द्रियस्य व्यञ्जकान्तरस्य कल्पनाप्ययुक्ता । घटादावपि तत्कल्पनाप्रसङ्गात् ॥**

**तस्माद्द्वयोरेको नित्यः अन्यस्तु व्यञ्जक इति**

---

भिन्नदेशत्वं व्यनक्ति—**उच्चारणं हीति** । ध्वनिवर्णयोर्नित्यत्वे विभुद्रव्यतया सर्वगतयोर्निरवयवयोर्वक्तृनिष्ठनाप्युच्चारणेनाभिव्यक्तयोः श्रोत्रेण ग्रहणमविरुद्धम् । तथाप्य[1]न्वयव्यतिरेकाभ्यां शब्दस्थळे [2]श्रोत्रसंबद्धेनैव व्यञ्जकेनाभिव्यक्तस्य श्रोत्रेण ग्रहणम् । अन्यथैक[3]वक्तृनिष्ठोच्चारणाभिव्यक्तशब्दस्य सर्वैरपि ग्रहणप्रसङ्गादिति भावः—**भिन्नेन्द्रियेति** । उच्चारणस्य चाक्षुषत्वाच्छब्दस्य श्रावणत्वादिति भावः ॥

यद्यपि गोघृतादेः कुंकुमगन्धादेश्च भिन्नेन्द्रियग्राह्यत्वेपि अस्ति [4]व्यञ्जकव्यङ्ग्यभावः । तथाप्यन्वयव्यतिरेकाभ्यां शब्दस्थले एकेन्द्रियग्राह्ययोरेव तथात्वावगतेरिति भावः । घृतादावपि प्रतिनियतव्यञ्जकव्यङ्ग्य[5]वादे वक्ष्यमाणदिशा घृतादिगतगन्धादिरेवाभिव्यञ्जक इति[6] भावः । अन्ये त्वेकेन्द्रियग्राह्यत्वं वा एकेन्द्रियग्राह्यगुणकत्वं वा व्यञ्जकत्वे तन्त्रमित्याहुः ॥

**अत एवेति** । वायोरतीन्द्रियत्वेन श्रोत्रेन्द्रियाग्राह्यत्वादिति भावः—**अत एवेति** । तद्ग्राहकेन्द्रियग्राह्यस्यैव तद्व्यञ्जकत्वादित्यर्थः—

---

[1] अन्वयव्यतिरेकाभ्यां शब्दस्थळे इति नास्ति—अ-इ. [2] श्रोतृसम्बन्धेनैव—इ.
[3] वक्तृपदं नास्ति—अ. [4] व्यङ्ग्यव्यञ्जक—इ. [5] त्ववा—इ. [6] वा—अ.

वक्तव्ये नतावद्ध्वनिरेव नित्यो वर्णस्तु व्यञ्जक इति युक्तम् । भेर्यादौ वर्णाभावेपि ध्वनिग्रहात् । तस्मात्परिशेषाद्वर्ण एव नित्यो धन्विस्तु व्यञ्जक इति युक्तम् । ध्वन्यभावे वर्णाग्रहात् ॥

[1]तदेवमुपपत्तिविरोधादापणे ध्वनिरुत्पन्नः स च शान्त इति ध्वनित्वेनैवोत्पत्त्याद्यनुभवविरोधाद्वर्णप्रत्याभिज्ञाया "यावद्ब्रह्मविष्ठितं तावतीवागि"-त्यादिश्रुत्यनुगृहीतत्वाच्च सैवेयं [2]घर्घरीत्यादेरेव भ्रान्तित्वादिकं युक्तम् ॥

तदेवमुक्तरीत्या बाधकाभावेपि वर्णे[3] सोयमिति

---

**तदेवमिति** । तस्मादेवं ध्वनिवर्णयोरित्यादिनोक्तरीत्येर्थः । [4]तत्तस्मादित्यस्य विवरणं **उपपत्तीत्यादि** । **तावती वागिति** । तावत्कालीनो वर्ण इत्यर्थः ॥

वागित्यस्य टीकायां वेदरूपा वागिति व्याख्यानेपि सजातीयानुपूर्वीकत्वेनैव तावत्कालत्वस्य वाच्यत्वेन मुख्यार्थ[5]लाभाय वर्णरूपार्थान्तरमुपेत्य वा वेदरूपवाचस्तावत्कालीनत्वस्य[6] वर्णानां तावत्कालीनत्वाभावेऽयोगादर्थलब्धमुपेत्य वा श्रुत्यनुगृहीतत्वाच्चेत्युक्तम् । अत एव टीकायां तावती वागिति वर्णानां व्यापकत्वस्याभ्युपगतत्वेनेत्यप्युक्तमित्यदाषेः ॥

एवं प्रत्यभिज्ञाया अनन्यविषयत्वं प्रसक्तबाधकनिरासेनाभ्रान्तित्वं च समर्थ्योपसंहरन् परपक्षे बाधकोक्त्याप्युक्तं समर्थयते—**तदेवमित्यादिना—अन्यत्प्रमाणमस्तीत्यन्तेन—उक्तेति** । " न च भेदधीर्बाधिके "

---

[1] तस्मात्-छ-क. [2] गूर्जिरी-छ-क-ग-गुर्जरी-ख. [3] र्णः सो-क.
[4] तत्पदं नास्ति-अ-इ. [5] र्थत्व-अ. [6] त्वाभावे.

व्यपदेश एव न तु प्रतीतिरिति तदपलापे वा, [1]तदनपलापेपि [2]तस्याः पुरोवृत्तिगकारे गत्वेनोपस्थितगकाराभेदविषयत्वेनाभिज्ञात्वे वा, प्रत्यभिज्ञात्वेपि साक्षात्परंपरया[3] जात्यभेदविषयत्वे वा, व्यक्त्यभेदविषयत्वेपि तस्याः भ्रान्तित्वे वा, तत्तद्वादिभिस्तत्तद्वस्तुनः स्थायित्वेन प्रमाणत्वेनाङ्गीकृताया अपि स एवा[4]हमित्यादिप्रत्यभिज्ञाया अपलापादिप्रसङ्गेन कस्यापि स्थायि[5]त्वं न सिद्ध्येदिति क्षणिकवादः स्यात्। न हि स्थायित्वे प्रत्यभिज्ञातोऽन्यत्प्रमाणमस्ति ॥

तदेतदभिप्रेत्योक्तं भगवत्पादैः। "न च

---

त्यादिनोक्तरीत्येत्यर्थः—तदपलापे वेति। "न च तानेव शालीनि" त्यादिनोक्तरीत्या प्रतीत्यपलापे वेत्यर्थः। "तस्या" इत्यतः पूर्वमप्युक्तरीत्येत्यनुषञ्जनीयम्। "न चेयं प्रत्यभिज्ञे" त्यादिनोक्तरीत्येति तत्रार्थः। एवमग्रेप्युक्तरीत्येत्यनुवर्त्य यथायोगमर्थो योज्यः॥

सप्तम्यन्तोक्तापादकचतुष्टयेप्यनिष्टापादनमाह—**तत्तद्वादिभिरिति**। सर्वक्षणिकत्वं वदद्भिरपि बौद्धैः

"आकाशो द्वौ विनाशौ च नित्यं त्रयमसंस्कृतम्"

इत्युक्तत्वेनाकाशस्य बुद्धिपूर्वविनाशाबुद्धिपूर्वविनाशयोश्च नित्यत्वोपगमेन तेषामपीदमापादनं सममिति सूचनाय—**तत्तद्वादिभिस्तत्तद्वस्तुन इत्युक्तम्**। अपलापादीत्यादिपदेन प्रागुक्तापादक[6]त्रयग्रहः—**तदेतदिति**। व्यपदेशादिपक्षचतुष्टयमपि नेत्येतत्तत्त्वनिर्णय उक्तमित्यर्थः॥

---

[1] प्रतीत्यनपला—क-ख. [2]अनन्तरं "साक्षात्परंपरे" त्याद्येवास्ति—छ. [3]राजा—क. [4] वायमि—ग. [5]अत्र सर्वत्र 'पि' इत्येवास्ति—क. [6] 'त्रय' इति नास्ति—अ.

सादृश्यात्प्रत्यभिज्ञा भ्रान्तिरिति वाच्यम् । सोयं देवदत्त इत्यादेरपि तथात्वा[1]पत्ते" रिति । अत्र प्रत्यभिज्ञा भ्रान्तिरित्यस्य समस्तपदत्वेन व्यपदेश-मात्रत्व[2]पक्षे तस्मिन्व्यपदेशे प्रत्यभिज्ञात्वभ्रान्ति-रिति, पुरोवृत्तिनस्तदभेदाविषयकाभिज्ञात्वपक्षे त-स्यास्तत्का[3]लीनावच्छिन्नाभेदविषयकप्रत्याभिज्ञा-त्वभ्रान्तिरिति, जात्यभेदविषयकप्रत्यभिज्ञात्व-पक्षे तस्यां व्यक्त्यभेदविषयकप्रत्यभिज्ञात्वभ्रान्ति-रिति, व्यस्तपदत्वेन व्यक्त्यभेदाविषया प्रत्यभिज्ञा भ्रान्तिरिति पक्षे व्यक्त्यभेदविषयापि प्रत्यभिज्ञा भ्रान्तिरेव न तु [4]प्रमेति, [5]चार्थो द्रष्टव्यः ॥

---

टीकायां चतुर्थपक्षनिरासपरत्वेन व्याख्यानेपि बह्वर्थकत्वान्मूल-ग्रन्थस्य स्वोक्तपक्षचतुष्टयनिरासमपि मूलारूढं दर्शयति—**अत्रे**[6]**ति** । मूलवाक्य इत्यर्थः —**समस्तेति** । चतुर्थपक्ष एव भिन्नपदत्वात्तदन्यपक्ष-त्रयेपि भावप्रधाननिर्देशेन प्रत्यभिज्ञात्वेन भ्रान्तिः प्रत्यभिज्ञाभ्रान्तिरिति समासं प्राप्तपदत्वेन हेतुनाऽव्यस्तपदत्वेन हेतुनेत्यर्थो द्रष्टव्य इत्यन्वयः । "अर्थो द्रष्टव्यः" इति पदद्वयं । पूर्वत्र प्रत्येकं इतिशब्दत्रयान्तेपि व्यपदेशमात्रपक्ष इत्यर्थो द्रष्टव्य इत्यादिरूपेणान्वेतव्यम् ॥

---

[1] त्वापातादिति-**ग.** [2] 'मात्रम्'—ततः "जात्यभेद" इत्यादि "भ्रान्ति-रिति" इत्यन्तं, ततः 'पक्षेस्मिन् व्यपदेशे प्रत्यभिज्ञात्वभ्रान्तिरिति' इत्यारभ्य, "तत्कालावच्छिन्नाभेदविषयकप्रत्यभिज्ञात्वभ्रान्तिरिति" इति पङ्क्तिः, ततः "व्यस्त-पदत्वेन" इत्यादि च वर्तते-**ग.** [3] लावच्छिन्नाभेद-**छ-ख.** [4] भ्रम इति-**छ.** [5] वा-**ग.** [6] 'च' इत्यधिकम्-**अ.**

एतेन "प्रत्याभिज्ञानन्तरमुत्पत्त्यादिप्रत्ययानां तदनन्तरं च प्रत्यभिज्ञाया दर्शनेनोभयाबाधायोत्पत्त्यादिधीर्व्यक्तिविषयिणी अभेदधीस्तु जातिविषया ; यद्वोत्पत्त्यादिप्रत्ययानामनेकत्वात्तद्विरुद्धैका प्रत्यभिज्ञा भ्रान्तिः। बहुबाधस्यान्याय्यत्वात्" इति [1]मण्युक्तं निरस्तम्। प्रत्यभिज्ञाया विशेष्यात्मकव्यक्त्यभेदविषयत्वेनोत्पत्त्यादिप्रत्ययस्य च विशिष्टविषयत्वेनोभयप्रामाण्यस्योक्तत्वात्। प्रत्यभिज्ञा व्यक्त्यभेदविषया, उत्पत्त्यादि धीस्तु ध्वनिविषयेत्यपि सुवचत्वाच्च ॥

किं चोत्पत्तिधीः संसर्देऽपगतेऽवकाशो[2] जात इत्याकाशोत्पत्तिधीवदभिव्यक्तिविषयास्तु। त्वन्मते बाधलाघवोक्तिश्चायुक्ता। त्वदभिमतानां अयं शुकोत्पन्नो गकारः, अयं शुकोच्चारितो गकारो

---

मण्युक्तमन्यदपि निराह—**एतेनेति**। उत्पत्त्यादीत्यादिपदेन विनाशतारमन्दत्वादिप्रत्ययग्रहः—**उक्तत्वादिति**। "न च भेदधीर्बाधिके" त्यादिग्रन्थेनोक्तत्वादित्यर्थः ॥

ननूत्पन्नो गकारो नष्टो गकार इति प्रतीतेः कथं ध्वनिविषयतेत्यत आह—**किं चेति**। बहुबाधस्यान्याय्यत्वादित्युक्तिं च निराह—**त्वन्मत इति**। **त्वदभिमताना** मित्यस्य [3]**प्रत्ययाना** मिति षष्ठ्यन्तेनान्वयः। सर्वलोकसिद्धानामित्यस्य वक्ष्यमाणषष्ठ्यन्ताभ्यामन्वयः ॥

---

[1] मण्युक्तमिति नास्ति–ख. [2] त्पत्तिधीवत् इत्यस्ति–ग. [3] मानानां–इ.

[1] नष्ट इत्यादीनामुत्पत्त्यादिसाक्षात्काररूपप्रत्ययानां; सर्वलोकसिद्धानां[2] शुकोच्चारितो गकारोऽयं[3] वर्तते श्रोत्रे शुकगकार इत्याद्यभिज्ञनां; यः पूर्वं गकारः श्रुतः स एवेदानीमपि, योऽन्यत्र स एवात्रापि, यश्चैत्रोच्चारितः स एव मैत्रोच्चारितः, एकोच्चारिते[4]पि यः प्राच्येन श्रुतः स एव प्रतिच्येनापि, यो निकटस्थेन श्रुतः स एव दूरस्थेनापीत्यादिप्रत्यभिज्ञानां च; वाध[5]कत्वेन त्वन्मत एव बहुवाधात् ॥

न हि त्वत्पक्षे शुकोत्पन्नस्येदंत्वेन साक्षात्क्रियमाणत्वेन[6] वर्तमानत्वेन श्रोत्रस्थत्वेन च सामानाधिकरण्यम् । न वा एकोच्चारितेपि कदंब[7]गोलकन्यायपक्षे प्राच्यप्रतीच्ययोरेकत्वम् ॥

---

ननूक्तत्रिरूपप्रतीतीनां कुतो बाधो न्यायमत इत्यत आह— न हीति । शब्दोत्पत्तिदेशात्कदंबगोलकन्यायेन शब्दानां दशस्वपि दिक्षु दशधा शब्दाच्छब्दान्तरोत्पत्तिक्रमेण कर्णदेशप्राप्त्युपगमेन कर्णदेशसंबद्धस्य शुकमुखोत्पन्नशब्दजातीयत्वेन साक्षात्तदुत्पन्नत्वाभावात् । एवं तत्तद्दिगवस्थितपुरुषैःश्रूयमाणस्यापि दिगन्तरस्थितपुरुषान्तरश्रुतशब्दजातीयत्वेन साक्षात्तदभेदाभावादिति भावः ॥

ननु तटाकादिमध्ये पाषाणाद्यभिघाताद्दशदिक्सम्बन्धिन्य एकैका

---

1 न सः–ग. 2 अस्य पूर्वान्वयः रेखाद्वयेन सूचितः–छ. 3 'अयं' इति नास्ति–छ-क-ग-ख. 4 तः–छ-क. 5 धेन–छ-क-ग. 6 'नष्टत्वेन' इत्यधिकम्–च-क-ग-ख 'वर्तमानत्वेन' इति नास्ति–छ. 7 मुकुळ–ख.

